॥ श्री ॥

ॐ नमः परमात्मने ।

---

# ब्रह्मसिद्धान्तः ।

ब्रह्मणा विरचितः ।

---

ध्यानयोगसमारूढं ब्रह्माणं त्रिजगद्गुरुम् ।
अभिवाद्य सुखासीनं नारदः परिपृच्छति ॥ १ ॥
देवदेव जगन्नाथ सर्वज्ञ कमलासन ।
ज्योतिषां चरितं ज्ञानं ब्रूहि कालाश्रयं महत् ॥ २ ॥
अधीतमखिलं छन्दः स्वाङ्गरूपं प्रतीयते ।
अङ्गैर्विना यथैवाङ्गी तस्मादेतत् प्रसीद मे ॥ ३ ॥
इत्येवमुक्तो विश्वात्मा नारदेन महर्षिणा ।
पुत्रेण धीमता प्रीत्या वाक्यमेतदभाषत ॥ ४ ॥

ब्रह्मोवाच ।

साधु साधु महाभाग यन्मां त्वं परिपृच्छसि ।
विस्तरेण प्रवक्ष्यामि तन्मे निगदतः शृणु ॥ ५ ॥
नारायणः सुरश्रेष्ठो वेदाकारेण वर्तते ।
छन्दःशास्त्रं तस्य पादौ कल्पः पाणी मुखं तथा ॥ ६ ॥

शब्दशास्त्रं श्रोत्रयुग्मं निरुक्तं घ्राणमेव च ।
शिक्षाशास्त्रं ज्योतिष तु नयनं पृष्ठमेव च ॥ ७ ॥
एतैरङ्गैरसावङ्गी राजते वेदविग्रहः ।
प्रधानमङ्गमेवेदमङ्गेष्वेष्वेव षट्सु च ॥ ८ ॥
एतच्च मत्तः शीतांशोः पुलस्त्याच्च विवस्वतः ।
रोमकाच्च वसिष्ठाच्च गर्गादपि बृहस्पतेः ॥ ९ ॥
अष्टधा निर्गतं शास्त्रं स्वयं परमदुर्लभम् ।
एतेऽपि कालाधीनानि ज्ञानानि विदुरीश्वराः ॥ १० ॥
गतागतं चिरं कार्यं कालस्तत्प्रभवात्यये(?) ।
हेतुः कारणकालोऽसौ सर्वाधारस्त्रिविक्रमः ॥ ११ ॥
तत्कार्यं कालकलनं वक्ष्यते नारदोऽधुना ।
अष्टादश निमेषास्तु काष्ठा त्रिंशत् तु ताः कला ॥ १२ ॥
तासां त्रिंशत् क्षणस्तेऽपि षट् नाडीति प्रशस्यते ।
यद्वा गुर्वक्षराणां तु दशकं प्राण उच्यते ॥ १३ ॥
षड्भिः प्राणैर्विनाडी तु तत्षष्ट्या घटिका तथा ।
श्वासः प्राणस्तु सर्वेषां तदायुस्तेन निर्दिशेत् ॥ १४ ॥
नाडीषष्ट्या त्वहोरात्रं(१) मासस्त्रिंशता भवेत् ।
मानमार्चमिति प्रोक्तं सावनाद्यमथोच्यते ॥ १५ ॥
उदयादुदयं भानोर्भूदिनं स्मृतु(२)लोकजम् ।
स्यात् तेनार्कोदयो मासस्तथाऽयं सावनश्च हि ॥ १६ ॥

(१) दिवारात्र—पा० २ पु० ।   (२) मर्त्य—पा० २ पु० ।

भास्वद्विप्रयोगतश्चन्द्रो यावतैति रविं पुनः ।
स्यात् तावानैन्दवो मासस्तिथीनां त्रिंशता च सः ॥ १७॥
तत्पूर्वोत्तरपक्षौ तु स्वतः सिद्धौ सितासितौ ।
कृत्तिकादिद्वन्द्वगतात् पूर्णेन्दोः कार्त्तिकादयः ॥ १८ ॥
त्रिधा मासा उपान्त्यान्त्यप्रथमास्तु(१) त्रयो ऽत्र हि ।
पितरश्चन्द्रबिम्बस्था अग्निष्वात्तादयो रविम् ॥ १९ ॥
उदितं कृष्णपक्षार्धे पश्यन्त्यन्यत्र चास्तगम् ।
अहोरात्रं तत् पितृणां चान्द्रो मासः प्रकीर्त्यते ॥ २० ॥
मासपक्षावसाने तु तद्दिवारात्रिमध्यमौ ।
संक्रान्त्यां सौरमासस्तु मासद्वयमृतुर्भवेत् ॥ २१ ॥
वर्षं षडृतवो दिव्यमहोरात्रं च तन्मुने ।
कपित्थाकारभूगोलमध्यगो मेरुपर्वतः ॥ २२ ॥
नानारत्नचयो हैम उभयत्र विनिर्गतः ।
तस्योपरिष्टात्सेन्द्रामरास्तस्मान्महर्षयः ॥ २३ ॥
अधस्तादसुरास्तद्वत्स्वस्वबलपराक्रमाः ।
ग्रहो मेषायने प्रोद्यत्संचरन्नुदगुत्तरम् ॥ २४ ॥
पूरयेत् प्रागहर्मध्यं देवानामृतुभिस्त्रिभिः(२) ।
याम्यायनाद्यैस्त्रिगृहैरह्नः पश्चार्धमेव सः ॥ २५ ॥
तथा तुलाद्यैर्दैत्यानामपि सौम्यायनादिभिः ।

---

(१) उपान्त्यान्त्यपक्षप्रथमास्तु—पा० १–२ पु० ।
(२) राशिभिस्त्रिभिः—पा० २ पु० ।

सुरासुराणामन्योन्यमहोरात्रं विपर्ययात् ॥ २६ ॥
दिवारात्रिप्रमाणं च भानोर्भगणपूरणात् ।
विकलानां कला षष्ट्या तत्षष्ट्या भाग उच्यते ॥ २७ ॥
तत् त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते ।
तुलादिषडशीत्यंशैः षडशीतिमुखं दिनम् ॥ २८ ॥
तच्चतुष्टयमेव स्याद्द्विस्वभावेषु राशिषु ।
षड्विंशे धनुषो भागे द्वाविंशे निमिषस्य च ॥ २९ ॥
मिथुनाष्टादशे भागे कन्यायास्तु चतुर्दशे ।
तत शेषाणि कन्यायां यान्यहानि तु षोडश ॥ ३० ॥
क्रतुभिस्तानि तुल्यानि पितॄणां दत्तमक्षयम् ।
यत्र क्षेत्रे भवेत्तस्य षडशीतिमुखं(१) दिनम् ॥ ३१ ॥
षडशीतिमुखं नाम तस्य क्षेत्रस्य कीर्त्यते ।
सौम्ययाम्यायने यत् स्यात् क्षेत्रं तद्दयनाभिधम् ॥ ३२ ॥
विषुवद्दाये मध्यदेशा(२)दुपरिष्टाद्दिवाकर.(३) ।
तुलामेषायने याति ग्रहो यद्विषुवस्य तत् ॥ ३३ ॥
चरस्थिरद्विस्वभावफलैस्ते च मृगादयः ।
शिशिरादिऋतुर्षड्भिः पुनश्च शिशिरादयः ॥ ३४ ॥
स्थिरं विष्णुपदं चेति तन्नाम स्थिरभं स्मृतम् ।
मेषचैत्रादिमासास्तु मध्वाद्या इति कीर्तिताः ॥ ३५ ॥

---

(१) भवेद्देतत् षडशीतिमुख—पा० १ पु० ।
(२) मध्यसूत्रा—पा० १ पु० । (३) विवस्वतः—पा० १ पु० ।

क्वचिद्दैतैर्वसन्ताद्या यजमानेच्छया पुनः ।
संपरीदन्विताद्यास्तु(१) वत्सराः प्रभवादयः ॥ ३६ ॥
प्रमाथी प्रथमं वर्षं सौरं कल्पस्य सर्वदा ।
दिव्यैरहोभिर्वाह्मैर्वा वर्षज्ञानं पुरोक्तवत् ॥ ३७ ॥
दिव्याब्दानां सहस्राणि द्वादशैव चतुर्युगम् ।
युगस्य दशमो भागश्चतुस्त्रिद्व्येकसङ्गुणः ॥ ३८ ॥
क्रमात् कृतयुगादीनां षष्ठांशः सन्ध्ययः स्वकाः ।
युगेषु तत्र(२)वर्तन्ते गतागतयुगस्थितौ ॥ ३९ ॥
कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया ।
सन्ध्यासन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम् ॥ ४० ॥
चतुर्युगाणां सैका स्यात् सप्ततिर्मनुसञ्चरः ।
कृताब्दसंख्या तस्यान्ते संविधानी जलप्लवः ॥ ४१ ॥
मन्वन्तरव्यवस्थेयं प्राजापत्यमुदाहृतम् ।
कल्पे ससन्धयो ज्ञेया मनवस्ते चतुर्दश ॥ ४२ ॥
कृतप्रमाणः कल्पादौ सन्धिः पञ्चदशः स्मृतः ।
इत्थं युगसहस्रेण भूततारादिमानकः ॥ ४३ ॥
संहारकारकः कल्पः कथितस्तव नारद ।
सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ॥ ४४ ॥
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ।

(१) सपरीदान्विदाद्यास्तु—पा० १–२ पु० ।
(२) युगपद् तत्र—पा०१पु ।

यावद्ब्रह्माखिलं विश्वं तावत् तिष्ठति तिष्यति' ॥ ४५ ॥
शतायुः पुरुषः सर्वः स्वयाऽहोरात्रसंख्यया ।
ग्रहर्क्षदेवदैत्यादि प्रतिकल्पं चराचरम् ॥ ४६ ॥
क्षताद्रिवेदैर्दिव्याब्दै शतघ्नै ४७४०० सृज्यते मया ।
ज्यापिण्डमध्ये परिधिक्रमेण लवणार्णवः ॥ ४७ ॥
मेखलावस्थितस्तस्या देवासुरविभागकृत् ।
योजनानां शतं त्रिंशद्युतं तस्यापि विस्तरः ॥ ४८ ॥
तन्मध्ये तुल्यभागे तु स्वर्णप्राकारतोरणा ।
चतस्र एताः पूर्वाद्या नगर्यो देवनिर्मिता ॥ ४९ ॥
यमकोटिश्च लङ्का च रोमकं सिद्धपुर्यपि ।
उपरिष्टाद्व्रजत्यासां भचक्रं ग्रहसंयुतम् ॥ ५० ॥
विशेषाद्विषुवत्यर्कस्तस्मान्ना विषुवत्प्रभा ।
पुष्करद्वीपमध्यस्थे महापुष्करभूधरे ॥ ५१ ॥
तिष्ठता सिद्धपुर्यां तु ग्रहाः संस्थापिता मया ।
कल्पादौ सृष्टिकाले तद्दुपर्येव तदादिषु ॥ ५२ ॥
मध्योदयार्द्धराच्यस्तकाले वारः प्रजायते ।
तदा पश्चान्मुखं सर्वं ग्रहनक्षत्रतारकाः ॥ ५३ ॥
सृज्यन्ते खाभ्रभूपद्विकासुभिः २१६०० (१) साधनोद्भवैः ।
ग्रहनक्षत्रताराणां समोद्गमनकारणात् ॥ ५४ ॥

---

(१) सृज्यन्तेमामभूपद्वैस्वसुभि —पा० १ । २५० ।

पूर्वोक्तासुदिनं त्रिंशन्नाडिकं नक्तमप्यथ ।
विषुवत्युदयस्थानात् प्राक्प्रत्यक्पश्चिमोत्तराः(१) ॥ ५५ ॥
प्रादक्षिण्येन ककुभस्ततस्तश्च विनिर्दिशेत् ।
एवमुक्तपुरीभ्योऽयमुत्तरो मेरुरामरः ॥ ५६ ॥
असुरो दक्षिणः याम्या नियमो न तयोः समः ।
लिप्तासु चक्रतुल्यासु दृश्यते सकलं यदि ॥ ५७ ॥
विषुवद्दिवसे भूस्थे तावतीने कुतो दिशः ।
इति पर्यटतां यो यत्राति यद्यदुडून्यपि ॥ ५८ ॥
यतोत्य तरसा याति यत्प्रत्यक् प्राग्गतिश्च सा ।
तुल्यमेवातिक्रमणं तावत्याऽश्व(२) स्वकक्षया ॥ ५९ ॥
ऊर्ध्वं तत्परिवर्तेन पौष्णान्ते भगणः स्मृतः ।
सर्वेच्छाफलवधे प्रमाणाप्तं च तत् फलम् ॥ ६० ॥
त्रांशेच्छामानसाम्यं दोःकोटिवर्गयुतेः पदम् ।
कर्णो दशपदाभ्यस्तो विष्कम्भात् परिधिर्भवेत् ॥ ६१ ॥
हानिवृद्धिधिया मार्गं व्यत्ययादिष्टमिष्टतात् ।
युगे खुः प्राग्गतेर्भानोर्ज्ञस्य शुक्रस्य चात्मग ॥ ६२ ॥

क्षुशार्किगुरुशीघ्राणां
भगणाः सूर्यवत्सराः ४३२०००० ।

---

(१) प्राचीन पश्चिमादय —पा० १ पु० ।
(२) नवतिर्वा—पा० १ पु० ।

प्राग्गतेः सूर्यमन्दस्य
सप्तकुञ्जरपावकाः ३८७ ॥ ६८ ॥
कौजात् कृतनखा २०४ नाग-
षड्गुणाः३६८खवियन्नव ६०० ।
शरपावकबाणाश्च ५३५
तथा नवकृताग्नयः ३४९ ॥ ६९ ॥
षष्टाग्नीभाद्रिविकृति-
ह्यष्टबाणेन्दवो १५८२२३७८२८युगे ।
भोदयाः प्राग्गतेरेते
भगणैस्तु विवर्जिताः ॥ ७० ॥
यातानां भगणैर्युक्ता उदयास्तस्य कीर्त्तिताः ।
नक्षत्रोदयतः पूर्वं प्रत्यग्गतिरुदेति हि ॥ ७१ ॥
पश्चात् प्राग्गतिरेतस्मा-
दधिकाल्पोदया युगे ।
अर्कोनचन्द्रभगणाः
शशिमासाः प्रकीर्त्तिता ५३४३३३६ ॥ ७२ ॥
दिनीकृतास्ते तिथयो १६०३०००८०
भूदिनोना १५७७९१७८२८ क्षयक्षपाः२५०८२२५२।
अर्केन्दुमासविश्लेषो
भवेत् १५९३३३६ पुत्राधिमासकाः ॥ ७३ ॥

अत्र चक्रकलाश्चन्द्रकक्षा पञ्चदशाहताः ३२४००० ।
व्योमकक्षा भवेदेषा कल्पेन्दुभगणाहता ॥ ७४ ॥
कक्षा ग्रहाणां सैवेह हृता चैव पृथक् पृथक् ।
स्वकल्पभगणैः कक्षाषष्टिर्भभ्रमणं रवे ॥ ७५ ॥
स्वकक्षाव्यासभव्यासविश्लेषार्धं तु मध्यमम् ।
सर्वेषां प्राग्गतं कल्प्यं भूदिनैर्व्योममण्डलम् ॥ ७६ ॥
एकस्य भूदिनस्याच्य कल्प्या प्रत्यग्गतिस्त्विह ।
छायाशङ्कू व्यासकोटौ कर्णोऽतो विषुवत्प्रभा ॥ ७७ ॥
छाया या सा विषुवती स्वदेशे स्याद्दिनार्धजा ।
शङ्कुः स्याद्विषुवत्कर्णो यत्र न क्षीयते तत ॥ ७८ ॥
वर्धमानो महीकर्णः स्यादिषुर्ज्या निरक्षक ।
अक्षाख्यौ द्वौ ध्रुवौ मेरोरुपरिष्टान्नभ स्थितौ ॥ ७९ ॥
भूतचन्द्रान्तरं भूमिध्रुवान्तरमपि ध्रुवम् ।
समुद्रे मध्यकक्षाऽस्याः क्षितिजस्थौ ध्रुवाविति ॥ ८० ॥
तत्रस्था परिपश्यन्ति दक्षिणोत्तरयोर्मुने ।
अक्षान्तरभावात् स व्यक्षदेश इति स्मृतः ॥ ८१ ॥
अन्यत्राक्षप्रभा यावत् तावच्चक्रस्य लम्बनम् ।
मेरोरभिमुखं यातुरुपर्युपरि दृश्यते ॥ ८२ ॥
ध्रुवस्ततस्ततश्चक्रं नीचैर्नीचैस्तु नारद ।
निरक्षाभिमुखं यातुरन्यथा तद्द्वयं भवेत् ॥ ८३ ॥

अक्षांशा नवति ९० र्मेरौ व्यक्षे लम्बांशकास्तथा ।
लम्बाक्षौ द्विविधौ ग्राह्यौ गणितेषु तथाऽपि च ॥ ८४ ॥
लम्बो ना च विभज्या चेद्वर्धमानो महीधवः(१) ।
वर्द्धमानः खखर्त्विन्दु १६०० योजनानि क्षितेस्तु सः ॥ ८५ ॥
भूकर्णानुगुणं तस्य ज्यांशा दृष्टेरदर्शनात् ।
भूकर्णदृष्ट्यनुगुणं नीयतेऽक्षो द्विगोऽधिकः ॥ ८६ ॥
तथाऽप्यक्षोन्नयतेः मङ्क्षुर्मन्दो हि गृह्यते ।
यथाद्विलोमगमनाल्लम्बाक्षावधिकोनकौ ॥ ८७ ॥
अक्षज्याविज्ययोः क्षेपो यथायथ इत्यथ ।
लम्बो हि भवता(२) नच गृह्यते तर्हि यत्नत ॥ ८८ ॥
तदिच्छानुगुणं लोके सुसिद्धं तन्निराकृतम् ।
स्यात् सुसाधयिता खेटः स्वाध्यायस्तदुपाश्रयः ॥ ८९ ॥
तस्मात् पञ्चसु सिद्धान्तेषूक्तमार्गोऽवधार्यताम् ।
घृतं सधूमं विपद्यन्मधुनाऽऽज्यं विषं तथा ॥ ९० ॥
संसर्गस्य विशेषेऽपि तथैतदनुमीयते ।
मध्याह्ने विषुवत्यर्कस्तस्याक्षांशा नतांशकाः ॥ ९१ ॥
तद्गतात् पलभा प्रान्तः साऽक्षच्छाया प्रकीर्त्यते ।
चक्रलिप्तार्धवर्गस्य दशमं करणीपदम् ॥ ९२ ॥

---

(१) हि तच्छूतः—पा० १ पु० ।
(२) लम्बो ह्यक्षोऽपि भवता—पा० २ पु० ।

व्यासार्धं तु चतुर्विंशो ज्यार्धपिण्ड इतीर्यते ।
वृत्तस्य षण्णवत्यंशो दण्डवद्यः २२५ समः स तत् ॥९३॥
प्रथम ज्यार्धमेवैतद्वर्गोनकरणीपदम् ।
(१)त्रयोविंशो ज्यार्धपिण्ड. परखण्डान्तरं ज्ययोः ॥९४॥
द्विघ्नेष्टहीना खण्डज्या यत्रार्धेन्दुयुता न चेत् ।
खण्डे शताधिके नेत्रवियद्वेदैर्युता तु चेत् ॥ ९५ ॥
खाद्रिनेत्रखखण्डा स्यादेष्यखण्डयुता सती ।
स्वखण्डरहिता जीवा स्यात् पूर्वज्या तु मौर्विका ॥९६॥
प्रायो दृश्यैव सन्न्यासां मध्येकादशवर्जिताः ।
छित्वा कुखण्डमूलानि तत्रान्याः स्युर्यथोदितम् ॥ ९७ ॥
यद्वाऽस्य भाज्ये ज्ये तत्र गुणपट्चन्द्रसयुते ।
द्वितीयभान्त्यजास्तिस्रो नगगोवह्निसंयुताः ॥ ९८ ॥

---

(१) एते ९४—१०३ श्लोका वक्ष्यमाणप्रकारेण साधवो भवितुमर्हन्ति परन्तु आदर्शानुरोधेन मूले तथैव स्थापिता इति विज्ञेयम् ।

त्रयोविंशो ज्यार्धपिण्ड परखण्डोऽन्तरं ज्ययो ॥ ९४ ॥
द्विघ्नेष्टहीना खण्डज्या षड्वार्धद्विमिता न चेत् ।
खण्ड स्वेष्टाधिको यत्र विगतस्त्वन्यथा तु चेत ॥ ९५ ॥
स्वाग्रमेऽत्र स्वखण्डः स्यादेष्यखण्डाभिध स तु ।
स्वखण्डरहिताज्जीवा स्यात् पूर्वज्या तु मौर्विका ॥ ९६ ॥
प्रायो दृश्यैव सन्त्यासां मध्ये द्वादशवर्जिता ।
छिन्द्या करण्या मूलानि ततोऽन्या स्युर्यथोदितम् ॥ ९७ ॥
यद्वाऽऽद्यमान्त्यजे ज्ये च गुणपङ्क्चेन्दुसयुते ।
द्वितीयमान्त्यजास्तिस्रो नगरवह्निसंयुता ॥ ९८ ॥

तत्पञ्चमी खखान्त्याद्या चेज्ज्या प्राग्वत् ततः स्फुटा ।
द्व्येतो द्वौ च सामान्यौ मार्गौ नानागुणैर्युतौ ॥ ९९ ॥
त्रिकृत्यधिकचक्रार्ध्यमार्धमार्गस्य किन्तु यत् ।
चाद्यमार्गे त्रिभज्यार्धं प्रथमज्या न यद्भवेत् ॥ १०० ॥
करणीपदपादोनकरणीदलमेव(१) हि ।
एकद्विभज्याद्दादशीज्या करणीज्यापदं किल ॥ १०१ ॥
एवं तस्माद्द्वाद्धमार्गे तत्सर्वानुगुणः स्फुटः ।
वर्गो निरूप्यते प्रोक्ता त्रिज्या प्राग्वत् करण्यपि ॥ १०२ ॥
चक्रस्य पञ्चषत्यंशो विलिप्ताघ्यकोऽथतः(२) ।
प्रथमज्यार्धमेतस्माद्द्विकृति(३)ज्या पुरोक्तवत् ॥ १०३ ॥
(४)द्विघस्य खण्डहीनाख्या नवाब्धिन्नियुतान्यभे ।
तदाब्धिद्वितयव्योमषड्विनेनयुतं क्रमात् ॥ १०४ ॥

---

तत्पञ्चमी खखण्डाद्या स्यान्ज्या प्राग्वत् ततः स्फुटः ।
द्व्येते- ... ... ॥ ९९ ॥
त्रिकृत्यधिक .. .. ।
प्रथमज्या तु यद्भवेत् ॥ १०० ॥
करणीपदपादोनकरणीपद–(मूल–) मेव हि ।
एव द्विभज्या त्रिज्या तु करणात पदं किल ॥ १०१ ॥
एव स्यादाद्यमार्गस्तु न सर्वानुगुण. स्फुटः ।
वर्गो निरूपितः प्रोक्ता त्रिज्या प्राग्वत् करण्यपि ॥ १०२ ॥
चक्रस्य पञ्चषत्यंशो मलिप्ताश्वकस्य [illegible] ।
प्रथमज्यार्धमेतस्माद्द्विकृतिज्या पुरोक्तवत् ॥ १०३ ॥

(१) करणीमूलमेव—पा० २ पु० । (२) अभितः ।
(३) अर्धोविंशी ज्या इति ।
(४) इतोऽग्रेऽध्यायसमाप्तिपर्यन्तं खण्डितः ।

यद्वातः खण्डसंशुद्धिलिप्ता योज्याः क्रमाच्च ताः ।
सप्तविश्वैर्नगाष्टाभीरसशैलैर्नगाभिधैः ॥ १०५ ॥
अतिधृत्यावाद्रिशैलैरसांभोधिभिस्ततः ।
द्वितीयभान्ते याज्याख्या युगनेत्रेन्दुसंयुताः ॥ १०६ ॥
तत्पञ्चमी सेतसूर्यात् तच्चतुर्थ्यष्टशैलभाक् ।
सेन्द्रातच्च तृतीयाद्याद्वितीये द्वादशोन्विते ॥ १०७ ॥
आद्यमेन्त्याच्छदशभागा विश्वाद्रिश्च स्फुटाध्वनि ।
तत्सप्तमी खभेत्याद्या तत्षष्ठी रदवर्जिता ॥ १०८ ॥
तत्पञ्चमी चतुर्थी सा खात्यष्टिगोग्निसंयुता ।
तृतीया विकला सा तत्फलं भूतिथिसंयुतम् ॥ १०९ ॥
द्वितीया यत्फलं वेदविकलाद्यभयोक्तवत् ।
सस्फुटज्याविधिश्चाचोक्तमज्याखण्डमष्टमम् ॥ ११० ॥
ज्यात्वाभावानुलोम्येन सपड्गान्यभाद्यभा ।
परखंडफलं प्रोक्तं स्वखण्डात् स्वस्वपूर्वया ॥ १११ ॥

इति श्रीब्रह्मसिद्धान्ते प्रथमोध्याय ॥ १ ॥

आकर्षतः स्वसम्बन्धाद्भवतीति स्फुटा स्थितिः ।
मन्दोच्चाभ्यामर्कचन्द्रौ यदा मन्दफलं मुने ॥ १ ॥
आकृष्येते एव तस्मान्मन्दकर्मैकमेतयोः ।
चलार्यानयने हारौ परेषां(१) द्वे तु तत्र हि ॥ २॥

---

(१) 'हाराण्य येषाम्'—इति पाठ साधु ।

तत्कर्मणां चतुर्णां च क्रमः प्राक् सूचितो मुने ।
ग्रहभुक्तेः फले कार्यं ग्रहवत् तद्विलोमगे ॥ ३ ॥
फलव्यस्ते केन्द्रभुक्तिर्यदि वा त्रिज्यया हता ।
तत्कर्णाप्ता सोच्चभुक्तेर्विशोध्या सा गतिः स्फुटा ॥ ४ ॥
ग्रहोच्चभुक्तियोगात् तु हित्वा केन्द्रगतिं स्फुटाम् ।
शीघ्रोच्चभुक्तिशेषार्धं ग्रहकेन्द्रगतिर्यतः ॥ ५ ॥
शीघ्रोच्चभुक्तिरेकाहतदैक्ये योक्तावद्गतिः ।
शीघ्रार्धभुक्तौ ताहश्यां फलाद्याय ग्रहस्य तु ॥ ६ ॥
फलार्धोर्धं तु मन्दार्धग्रहभुक्तियुताऽर्धिता ।
सा भवेद्विद्यमानत्वात् केन्द्रभुक्तिर्विधोस्तु सा ॥ ७ ॥
सोच्चभुक्तिर्भवेद्यात् सा प्रागुच्चेन्दुगतिस्ततः ।
ग्रहापचेमर्णं चार्धं कार्यं तत्प्रकीर्त्यते ॥ ८ ॥
ग्रहाणां भुक्तिरेवास्मिन् केन्द्रभुक्तिश्च मान्दयोः ।
स्फुटकेन्द्रगतेस्तस्याः स्फुटभुक्तिर्ग्रहस्य च ॥ ९ ॥
अथ वा केन्द्रभुक्तिः सा त्रिज्या कर्णान्तराहता ।
कर्णाप्ताऽशीघ्र्येऽर्धिता च ग्रहभुक्तेर्धनं त्वृणम् ॥ १० ॥
कर्णे त्रिज्याधिकोने तु व्यस्तं मान्दे विधीयते ।
उच्चैर्नीचैर्गते सूर्ये उच्चैर्नीचैर्ययुर्ग्रहाः ॥ ११ ॥
किञ्चित् तस्मात् फलं भानोस्तद्गत्या च तदा नतम् ।
ग्रहभुक्तिहतं भक्तं चक्रलिप्ताभिरर्कवत् ॥ १२ ॥
स्वर्णभुक्तिरद्यैतं ग्रहे कार्यं च तद्गतौ ।

मध्यग्रहेषु चोच्चेषु तद्भक्तिषु च तत्कृतं ॥ १३ ॥
तद्वादावखिलेष्वेवं कृतं यत् तद्धितं मतम् ।
स्वोच्चैः स्वनीचैस्ताभ्यां स्यादन्यस्यैतद्द्वयं भवेत् ॥ १४ ॥
अन्यस्यैवान्यदीयाभ्यां नातोऽर्कस्यैतदिष्यते ।
क्रियते या दुराशङ्का ग्रहस्फुटविधिं प्रति ॥ १५ ॥
साऽपरं दीयते पुन सांप्रतं तत्र तत् फलम् ।
मध्यसंज्ञा ग्रहाः पञ्चैवार्केन्दू नेति मध्यमौ ॥ १६ ॥
"यदि स्यात् तिथिसंवृद्धिह्रासाभावः प्रसज्यते ।
तिथयः सावनाहानि भगवार ह्रासवृद्धितः ॥ १७ ॥
यदि स्युरधिमासोनरात्र्यभावः प्रसज्यते ।
शुक्रज्ञयोः कर्षकोच्चं शीघ्रं तदितरस्य च ॥ १८ ॥
विक्षेपा न विकल्प्यन्ते फलहेतुर्न कल्पना ।
अर्केन्द्वोरपि शीघ्रार्धमन्दार्धादिप्रकल्पना ॥ १९ ॥
निष्फलत्वान्निरस्तैव महावायौ प्रधावति ।
तिरोधानेन पङ्कजादीन् वाद्यांश इव खेचरान् ॥२०॥
नुदति प्रवहश्चेति मार्गभेदादिदं न सत् ।
कर्माणि यानि चत्वारि ग्रहस्यैवेति तानि च ॥ २१ ॥
शीघ्रार्धं स्याच्छीघ्रफलं चतुर्थं द्विगुणं तथा ।
मन्दार्धं स्यान्मन्दफलं तृतीयमपि नान्यथा ॥ २२ ॥
किञ्चोच्चाभ्यां निरुक्ताभ्यामपकृष्टः पुनस्तथा ।

कल्प्यं चेत् पुनरप्येवं तथाऽर्केन्द्र च नारद ॥ २३ ॥
ग्रहोऽरि न शीघ्रोच्चमिति चेदुच्चताऽस्य न ।
निर्ज्योनशीघ्रकर्णाच्च सर्वदा मुनिसत्तम ॥ २४ ॥
नाथः शीघ्रोच्च इति चेद्ग्रहस्तद्व्यत्यगस्तु सः ।
यथ. कक्षा कल्प्यते चेत् कक्षाऽसौ तत्र कस्य वा ॥२५॥
तूष्णीं कक्षा कल्प्यते चेत् सर्वेषां तर्हि कल्प्यताम् ।
निष्फलत्वान्न सर्वेषामिति चेत् कल्प्यतां फलम् ॥ २६ ॥
निरर्थत्वात् कल्पनाया यथाकार्यं तु कारणम् ।
कल्प्यते चेत् कल्पितं तत्तथैव न तु किं पुनः ॥ २७ ॥
अतीन्द्रियार्थविज्ञाने प्रमाणं श्रुतिरेव हि ।
यथाश्रुति मया दृष्टं यत्तदेवानुज्ञातम् ॥ २८ ॥
मध्यमा. स्थायिनः सन्ति नेति चेन्मध्यमानुगाः ।
ग्रहाश्चतुष्कर्मवन्त इति यत् तन्निराकृतम् ॥ २९ ॥
मध्यशीघ्रार्धमन्दार्धफलमेति तदाश्रयैः ।
उपग्रहैश्चापकृष्टा मन्दोच्चैश्च ग्रहा ययुः ॥ ३० ॥
इति चेन्मन्दभागे च नैवाकस्मादुपग्रहाः ।
युज्यन्ते ते प्रकृष्टाश्चेदपकृष्टा ग्रहाश्च ते ॥ ३१ ॥
इति चत्वारि कर्माणि ग्रहस्यैव न तन्मतम् ।
उपग्रहापकर्षेऽपि पूर्वमेवेदमुच्यते ॥ ३२ ॥
अतो मन्दार्धशीघ्रार्धो न समीति हि नोच्यते ।
यतस्तेऽन्यतरस्यापि ग्रहमोरर्धसंक्रमोः ॥ ३३ ॥

एवमापकर्षणं कल्प्यं ग्रहस्यापि तथा पुनः ।
उपग्रहा न सन्तीति यदि ब्रूयाच्चतुष्टयम् ॥ ३४ ॥
कर्षणां स्याद्ग्रहस्यैव सन्ति तस्मादुपग्रहाः ।
अर्धाख्येनापकृष्टस्य नीचैर्नीचैर्यथा तथा ॥ ३५ ॥
उपग्रहोपकृष्टः स्यात् सग्रहस्तेन चेदिति ।
नैवमर्धग्रहस्थानज्ञानमेव तथोच्यते ॥ ३६ ॥
स्वच्छन्दगमनं तद्धि किं तद्वैतच्चनीचता ।
अर्धाख्येनोपकृष्टस्य स्पकृष्ट उपग्रह ॥ ३७ ॥
ग्रहस्याप्यपकृष्टः स्यात् तदभावान्न तन्भवेत् ।
विक्षेपौ च न चेदमौ पाताभ्यां शुक्रचन्द्रजौ ॥ ३८ ॥
विक्षेपौ तौ तथा चेगलिप्ता चेन्न स्फुटा स्वदिक् ।
अपकृष्टैर्ग्रहै साकं कर्षका यान्ति यत् ततः ॥ ३९ ॥
तेऽपकृष्टाः स्वमन्दाद्यै पातास्तेषु ततः फलम् ।
तृतीयमपि पातानां ग्रहवन्नेति कल्प्यते ॥ ४० ॥
तस्मान्मन्दार्धमन्दोच्चभगे यावदुपग्रहः ।
याति यद्दिशि तावत्येवास्ते तद्दिशि मध्यमात् ॥ ४१ ॥
स्वच्छन्दाकर्षकस्य चेपस्खलनमन्यथा ।
शीघ्रोच्चाविव शीघ्राख्यौ बुधशुक्रौ न चेतरौ ॥ ४२ ॥
इति चैतादृगुच्चाख्यां ग्रहस्थानं च बुध्यताम् ।
याम्योत्तरगती तद्वदुत्क्रमाद्भास्करस्य च ॥ ४३ ॥

तथैवानपकृष्टानां गतेराधिक्यमल्पता ।
ग्रहकर्षकयद्वस्तु किं न चेद्विधुपग्रहे ॥ ४४ ॥
स्वच्छन्दगमनं तेषां मन्दोच्चाः कथिता वृथा ।
मृषावादी च वेदः स्यात् तत् सर्वानर्थकारणम् ॥ ४५ ॥
मन्दार्थाद्यो यद्दिशि च याति तन्मध्यमो ग्रहः ।
यावन्ति कल्पे मन्दार्था यो गच्छेत् सोऽप्युपग्रहः ॥४६॥
स नास्ति यस्य गमनं कल्पजं गमनं न च ।
मन्दस्फुटाद्रोमशे हि सोमे च खेपसाधनम् ॥ ४७ ॥
कीर्त्तितं तत्कर्षकाः स्युर्न सम्बन्धान्तरं क्रमात्(१) ।
सूर्यरोमशसोमेभ्यो यथालब्धग्रहा इव ॥ ४८ ॥
कल्पिताः स्युः स्वनामादौ भिन्नाः संज्ञास्तथैव च ।
मन्दाकृष्टैर्हि मन्दाख्या ग्रहैरुक्ता ययुः सह ॥ ४९ ॥
विक्षिप्यन्ते च पातैस्तैस्ते ग्रहा इति कथ्यताम् ।
इति चेत् कर्षकाणां तु प्रोक्तनामन्तरं भवेत् ॥ ५० ॥
व्यक्तं श्रुतिकृतं नाम नैतदप्यस्ति पौलिशे ।
ग्रहे कृतं यत् तत्पाते कृते नेति च वर्त्तते ॥ ५१ ॥
सोमरोमशयोः पाताः बोध्या मन्देभ्य ईरिताः ।
शुक्रज्ञारातयोर्वामकत्र्यं सूर्यकीर्त्तितम् ॥ ५२ ॥
तृतीयेऽस्य न चेदिष्टं तत् तत्राप्यस्ति दूषणम् ।
श्रुत्यन्तरविरोधस्तु पौलिशेऽत्र च गम्यते ॥ ५३ ॥

---

(१) पूरे पात ३—टि० पा० ।

तद्वाऽस्य गमनं तावन्निर्णीतं च सहेतुकम् ।
उपग्रहनिमित्तं वा न तावत् प्रथमक्रमः ॥ ५४ ॥
यथेष्टकल्पनापत्तेर्द्वितीयः कल्प एव चेत् ।
पातमन्दोच्चमध्ये न फलं साध्यं न तन्मतम् ॥ ५५ ॥
कल्पस्तृतीयश्चेदुच्चेनापकृष्ट उपग्रहः ॥
अपूर्वेण स्वं पातमाकर्षति न वा सताम् ॥ ५६ ॥
स्तम्भच्छायादीपवच्चेन्न मन्दोच्चोऽस्य कारणम् ।
परस्परभचक्रार्धयातोपग्रहसङ्करः ॥ ५७ ॥
वामं निष्कारणं यातीतीयं वा कल्पना सती ।
स्वोच्चादुपग्रहाद्वाऽपि नाकस्माद्धि तदिष्यते ॥ ५८ ॥
सहेतुकं कल्प्यमानं कल्प्यते न तु हेतुकैः ।
मन्दोच्चेनापकृष्टस्तु यावद्व्रजति भास्करः ॥ ५९ ॥
तेनाकृष्टा यजास्तावत् ते तथोपग्रहैर्ययुः ।
भृत्यैस्तत् क्रियते कर्म स्वामिना क्रियते हि यत् ॥ ६० ॥
प्रत्यक् प्राग्वहिरन्तर्वा तद्ग्रहशोऽर्कसमं व्रजेत् ।
इति चेन्नैतदिष्टं स्वाङ्गीगाद्यावधिकं नृपाः ॥ ६१ ॥
सेनाद्यावधिकं भृत्या वर्त्तन्ते न हि तत्समाः ।
यावान् यस्याधिकारः स्यात् तावत् तस्य प्रवर्त्तनम् ॥ ६२
सर्वचक्राधिपः सूर्यः कियद्याति स्वभुक्तितः ।
इयद्यातीति युक्तिः स्याद्राजाऽनुचरकृप्तितः ॥ ६३ ॥

श्रुतिर्यत्र प्रमाणं स्याद्युक्तिः का तत्र नारद ॥
जिज्ञासोर्युक्तिरिष्टाऽस्ति यदि श्रुत्यनुसारिणी ॥ ६४ ॥
श्रुत्युक्तेष्टतरा युक्तिर्नान्यद्गायेत तच्छ्रुतिम् ।
ह्यत्वाऽऽद्रौ मान्दकर्मान्ते क्रियते शीघ्रकर्मवत् ॥ ६५ ॥
तस्मान्मन्दापक्षात् प्राक् शीघ्रेणाथापकृष्यते ।
किञ्चित्किञ्चिद्विलम्ब्यैव इति चेदपकर्षति ॥ ६६ ॥
नैतदेवं यदेवं चेत् गतिर्नानाविधाऽन्वहम् ।
बिम्बं च शुक्रकर्माख्य तद्वदेतदभावतः ॥ ६७ ॥
ननु बिम्बाल्पताधिक्यं खमध्ये क्षितिजेऽन्वहम् ।
इति तु क्षितिजे ब्रह्माण्डांशवो न ह्यधो भुवः ॥ ६८ ॥
पूर्णकुम्भांशवत्तस्माद्दृश्. प्रतिहती महत् ।
बिम्बं भूभाभिसंछन्नं रक्तवर्णं च दृश्यते ॥ ६९ ॥
धर्मं सुखलान्मध्यात् स पाश्वार्या खखरत्वतः ।
स्तोकस्तोकेन भूरश्मिह्रासे चण्डांशुदर्शनात् ॥ ७० ॥
दृष्टिप्रतिहते बिम्बं क्षीयमाणमिते गते ।
आरात् खमध्ये चण्डांशुरश्मिः प्रागल्भ्यते भुवः ॥ ७१ ॥
रश्म्यभावाञ्च पादोनं क्षितिजादिव दृश्यते ।
त्रिभिश्चतुर्भिः क्षितिजे खमध्येऽथ कलाहृतः ॥ ७२ ॥
अङ्गुलानि भवन्त्यस्मादित्युक्तं हि महर्षिभिः ।
भूमिकक्षाचतुर्भागे स्थितस्यात्मनस्तु यः ॥ ७३ ॥
क्षितिजस्य खमध्यस्य इत्येवासौ पुरोदितः ।

तिग्मांशुतस्तस्मा लिप्तासद्रानीमङ्गुलद्वये ॥ ७४ ॥
दृश्यते मण्डलेकेन विम्बमन्येन वाऽन्यथा ।
एकस्मिन् दिवसे तस्माद्बिम्बाधिक्यात्स्युता न हि ॥७५॥
बिंबतु कर्णयोगार्धं स्फुटकर्णोऽस्य मस्तके ।
ग्रहस्यात्यतः किंचिद्विलुम्ब्याकर्षण न हि ॥ ७६ ॥
उच्चद्वयानुगुण्येन ग्रहो यद्यपि सञ्चरन् ।
तथाऽपि युगपत् कर्मद्वयं न क्रियते यतः ॥ ७७ ॥
तथाऽऽनीता ग्रहास्तद्वत् दृश्यन्ते नैव वै ततः ।
उपदेशक्रमोऽप्येवं स च कर्मद्वयक्रमः ॥ ७८ ॥
यावता भाऽधिक कर्णस्तावताऽर्धेन तादृशी ।
त्रिज्यात स्फुटकर्णोऽपि नार्थसिद्धिविवर्जितः ॥ ७९ ॥
उपपत्त्यां यज्ज्ञातकथासिद्धिर्भवेत्तु तु ।
सुतरां मन्दशीघ्राख्यकर्मणो कथिते क्रमात् ॥ ८० ॥
उच्चैर्नीचैव्रजन्तो वा कानुरूपं समग्रवः ।
मध्यकर्णस्ततः कर्णान्तरत्व याति यन्मुने ॥ ८१ ॥
घान्तरे वनती वृक्षा वनप्रान्ते स्थिता इव ।
दूरत्वाच्चन्द्रकक्षायां दृश्यन्ते सकलास्तथा ॥ ८२ ॥
भौमार्किज्ञुधजीवानां त्रिंश(१)त्षट्पञ्चवर्जिताः ।
विष्कम्भाश्चन्द्रकक्षायां षष्टिः शुक्रस्य कीर्तिता ॥ ८३ ॥

(१) दन्तोचिवर्जिता इति—पा० २ पु० ।

(१)त्रिज्याघ्नाः स्फुटकर्णाप्ता विष्कम्भास्तेऽस्फुटाः स्मृताः ।
तिथ्याप्ता-विम्बलिप्ताः स्युरङ्गुलानि पुरोक्तवत् ॥८४॥

फलाग्र भगणा मानं विधोरिच्छेतरस्य तु ।
विष्कम्भवः फलमस्येति विष्कम्भः पारमार्थिकः ॥ ८५ ॥

तथार्कस्य स्वकक्षायां विष्कम्भः खखपञ्चषट् ६५००।
षष्टिरष्टाहता ४८० राहुस्तथा विम्बस्य नारद ॥ ८६ ॥

निजमण्डलविष्कम्भः स्वकक्षायां फलं विधोः ।
कक्षैक्यमानमथवा मानेष्टभगणैक्ययोः ॥ ८७ ॥

इतीन्दुमध्यकक्षायां विज्ञेयं विम्बयोजनम् ।
कक्षा वा भगणा मानमित्येवेच्छाधिकेन तु ॥ ८८ ॥

अर्केन्दुमण्डलव्यासौ स्फुटभुक्तिहतौ तयोः ।
मध्यभुक्त्युद्धृतौ स्पष्टौ प्राग्वल्लिप्तास्तदङ्गुलम् ॥ ८९ ॥

दूरस्थत्वात् तु विम्बस्य सौक्ष्म्यं स्थौल्यं प्रकीर्त्तितम् ।
लोकदृष्ट्या यथाऽद्रेः स्वस्थाने नित्यं समात्मनः ॥ ९० ॥

अर्कार्धचन्द्रकक्षाप्ता सूर्यविम्बश्रुतिर्यतः ।
इन्दुविम्बयवाप्ता या क्रोशोना वा न वा ततः ॥ ९१ ॥

अर्केन्दुकक्षाव्यासार्द्धं तद्विष्कम्भावबेधि ते ।
तन्मध्यभुक्तिगुणिते स्फुटभुक्त्युद्धृते स्फुटे ॥ ९२ ॥

---

(१) व्यर्धाप्तवर्तिथाप्तिशाद्विष्कम्भाशास्तु दृश्यत ।
भैमा कवुधजीवाना चन्द्रमार्गे तु नारद ॥
इति २ पुस्तके अधिक. पाठ. ।

भानोर्भार्धे महीछाया महत्त्वात् मण्डलस्य तु ।
अर्कस्य भूम्याः सूच्यग्रमानं शेषमिलार्कयोः ॥ ९३ ॥
असंकुचितशुद्धार्ककक्षाव्यासदलं फलम् ।
भूकर्ण इच्छाछायाग्रस्ततो लिप्तास्तदङ्गुलम् ॥ ९४ ॥
अर्केन्दुकक्षाव्यासार्धे स्फुटे संकुचिते क्रमात् ।
मानेच्छाफलमर्केलाशेषं प्रोज्झ्य ततः फलम् ॥ ९५ ॥
भूकर्णादिन्दुकक्षायां छायाव्यासस्तदाननम् ।
युक्त्या कालाङ्गुलं ग्राह्ये युक्त्यन्तरमतिस्फुटम् ॥ ९६ ॥
भूछायेलागतस्याथ तद्गिम्ममयो विधोः ।
सूचीमध्यमकक्षायां कियतीति महीयवः ॥ ९७ ॥
स्फुटसूर्येन्दुभुक्तिघ्नो भक्तो मध्यमया फलम् ।
स्फुटार्कचन्द्रकर्णाप्तं फलमर्कमृगाङ्कयोः ॥ ९८ ॥
मानेच्छमध्यकर्णास्तु प्रोज्झ्य सूच्याऽपि भाग्यवः ।
तिथ्यः कलायां सन्त्येवमेतदर्धं विधोः यवः ॥ ९९ ॥
मध्यमिच्छाधिकाल्पार्कबिम्बाभ्यां तादृशं त्वृणम् ।
मध्यार्कग्रहणे मानं तथा स्यादिति तन्मतम् ॥ १०० ॥
तस्यां स्फुटार्ककक्षायां व्यासार्धेनाधिकेन वा ।
अधिकाल्पमृणं माने नाधिकाल्पेऽर्कमण्डले ॥ १०१ ॥
परिध्यंशहते बिम्बव्यासो बिम्बयवो भवेत् ।
उच्चेन तु समं येन योऽपक्षयेत् स तत्सम. ॥ १०२ ॥
योऽत्यल्प उच्चो नीचाल्प. स्ववक्रस्तस्य एव च ।

तेनापचीयते स्वर्णं महदल्पं बहु स्वतः ॥ १०३ ॥
उच्चैर्नीचैर्गते स्वोच्चपरिध्यंशाः स्वभावतः ।
अल्पाधिककला भुक्तिरुच्चैर्नीचैर्गतस्य हि (१) ॥ १०४ ॥
स्यादेतच्च फले कर्णं(२) शैघ्रचेऽल्पा गतिरन्यथा ।
अधिकाऽल्पा च या भुक्तिरुच्चैर्नीचैर्गतस्य हि ॥१०५॥
त्रिज्याधिकाल्पे यदि तु वहिश्चरति स ग्रहः ।
स्वतः शीघ्रानभिमुखं मन्दं तु क्वचिदस्ति हि ॥१०६॥
नैवं यदि स्यादेवैवं स्यात् पूर्वा परभार्धयोः ।
उच्चैर्नीचस्त्वृणधनं वा यद्येतत् फलं क्रमात् ॥ १०७ ॥
यदीदं स्यादिह कला भुक्तिस्तथा या तु भमण्डलम् ।
यत्र प्राग्गतिहीनं वा(३)प्राक्प्रत्यग्गतिवद्ग्रहात्॥१०८॥
सर्वोच्चपातान् याऽतीत्य ब्रह्माण्डं वै तु नारद ।
प्रतिपादयितुं शक्या वक्रता न यतः परम् ॥ १०९ ॥
प्राग्गतिर्नास्ति यन्नास्ति केवलं तु न कारणम् ।
शनिमन्दात् परं चेत् को हेतुः खेटोऽप्यदर्शनात् ॥११०॥
वक्रता चाधिकगताविव कल्प्यो यदि ग्रहः ।
गतिरन्यानुरूपा सा भूयसीति न कीर्त्यते ॥ १११ ॥

---

(१) अल्पाधिका यथाशक्ति क्षेत्रा पातैरनपेदृशैः । इति २ पु० पा० ।
(२) स्यादेतच्चलकर्णेन—इति २ पु० पा० ।
(३) या चास्य विकला भुक्तिस्तया याति भमण्डलम् ।
ग्रहः प्राग्गतिहीने वा,...... ... ॥
अत्र पाठ शुद्ध पूर्यते ।

उच्चैर्नीचैर्गतस्यापि कार्या कर्णेन सूक्ष्मता ।
स्थौल्यं विम्बस्य चातो हि प्रसज्जेत मुनीश्वर ॥ ११२ ॥
स्पष्टनिष्टद्विगतेनैव युक्तियुक्तं यदीरितं ।
उभयोरचिसिद्धे ते तन्मे निगदतः शृणु ॥ ११३ ॥
उच्चाख्यं प्रोज्झ्य केन्द्रं तद्गतगम्यान्तरं तयोः ।
यदि कल्प्येत दोःकोटी तदा बाहुः प्रसज्जते ॥ ११४ ॥
गताद्भुजज्या विषमे गम्यात् कोटिपदं भवेत् ।
युग्मभावाङ्गतैष्याभ्यां कोटिबाहु युजीति च ॥ ११५ ॥
लिप्तास्तत्त्वयमैर्भक्ता लब्धं ज्यापिण्डका गताः ।
गतगम्यान्तराभ्यस्ता विभाज्यास्तत्त्वलोचनैः ॥ ११६ ॥
तदवाप्तफलं योज्यं ज्यापिण्डे गतसंज्ञके ।
इत्येवं नैव विवरं सदा ज्यापिण्डशक्तितः ॥ ११७ ॥
गतज्याभावतस्त्विन्दोश्चतुर्थी ज्या सदा भवेत् ।
एवं संवर्त्तमानायां तच्चतुर्थी गता ह्यपि ॥ ११८ ॥
न तात्कालिकसिद्धिः स्याद्वर्त्तमाना यथा स्वतः ।
इष्टनाडी हता केन्द्रगतिः षष्ट्योद्धृताऽपि सा ॥ ११९ ॥
बाहुकोटी ज्यान्तरघ्ने तत्त्वनेत्रैस्तयोः फले ।
प्रत्यहं वर्द्धमानत्वाच्छीघ्रकेन्द्रस्य वर्द्धते ॥ १२० ॥
बाहुरोजपदे युग्मे क्षीयते कोटिरन्यथा ।
प्रत्यहं क्षीयमाणत्वान्मन्दकेन्द्रस्य वर्द्धते ॥ १२१ ॥
कोटिरोजपदे युग्मे क्षीयते बाहुरन्यथा ।

तद्वत् तद्ग्रहवच्चास्य फलं ग्रहफलोदितम् ॥ १२२ ॥
धनाख्यमन्यहीनाख्यं धनाख्यं ग्रहवद्गतौ ।
ऋणाख्यमन्यथा प्रोज्झ्य वहुभुक्तिं गतेः फलात् ॥१२३॥
ज्यान्तरघ्नो गतिर्यद्वा दोःकोटिज्या ऽथ हक् क्वचित्(१)।
त्रिंशत्र्यंशादिभिर्मन्दे विचन्द्राद्यैर्हता हृता ॥ १२४ ॥
शैघ्र्ये विभज्यया तुल्या दोर्ज्या चेत् क्षीयते ऽन्वहम् ।
वर्धते स्फुटवृत्तांशास्तथा व्यस्तास्तु नान्यथा ॥ १२५ ॥
तद्व्यस्तं जीवयोर्न्योस्तु शैघ्र्ये युक्तिश्च सैव हि ।
स्फुटवृत्तान्तरहते दोःकोटिज्ये ग्रहस्य तु ॥ १२६ ॥
गताधं स्फुटवृत्तघ्नं वाहुकोटिज्ययोर्धनम् ।
वर्द्धमाने परिध्यंशे क्षीयमाणे ऋणं मुने ॥ १२७ ॥
गत्यर्धा वाहुकोटिज्या ग्रहवद्वर्द्धते यदि ।
धनात्मिका क्षीयते चेदृणरूपेति सैव च ॥ १२८ ॥
निक्षिप्य फलजान्योन्यैः हत्वा योगान्तरं मुने ।
भगणांशैर्बाहुकोट्योः फलजे तां विभज्य च ॥ १२९ ॥
ग्रहभुक्तेर्दोःफलज्यावर्गान्तरमितीरिता ।
कर्णदोःफलजावर्गैर्नाडिका यावता भवेत् ॥ १३० ॥

---

(१) दृक्वै.—इति २ पु० पा० ।

महमाद्यफलज्ये दृग्विधा त्रिज्या गुणोदिता ।
गुणिता च गतेर्दिश स्वर्णेबाहुप्रकल्पया ॥
इति २ पुस्तकेऽधिक. पाठ. ।

गते कोटिफलज्या तु द्विधा स्यात् तावता हृता ।
कर्णयोर्वृद्धौ तु स्वल्पायां गतिखेटयोः ॥ १३१ ॥
ग्रहदोःफलजावर्गो यावतोनाधिकं व्रजेत् ।
यावद्वर्गं गतिः कर्णस्तावत्येव न संशयः ॥ १३२ ॥
तां तु वर्गान्तरात् कर्णदोःकोटिज्यां विशोधयेत् ।
क्षीयमाणे वर्धमाने भूभाया तद्वये धनम् ॥ १३३ ॥
कुर्याद्यथोक्तनिष्पन्नकर्णवाक्ष्य यथा तथा ।
वर्धते क्षीयते चापि स्वगात् कोटिफलेन च ॥ १३४ ॥
कर्क्यादिकेन्द्रे तद्व्यस्तं चलकर्णस्तथा छतः ।
कर्णे कक्षागते कोटिफले मोक्षो महामुने ॥ १३५ ॥
छेदोऽसौ द्विगुणस्तेन स्वच्छेदाप्तफलेन च ।
दोःफलानगुणश्चेन्दोः स्वकाद्नाधिको भवेत् ॥ १३६ ॥
स्थिरीकर्मफलेनैव कर्णः कल्प्यः स्फुटः स्मृत ।
गत्यर्थं चलकर्णः स्यात् बिम्बादोःफलजावधे ॥ १३७ ॥
ग्रहबाहुफलज्या तु कर्णान्तरहृता तथा ।
स्वमूलाधिककर्णेन ग्रहकर्णविवारिणा ॥ १३८ ॥
ऊनाधिकगुणा तादृक् फलं यत्तच्छिदाऽन्यथा ।
स्वकाभ्यां हस्तकर्णाभ्यां ग्रहात् सिद्धात् ग्रह सुने ॥ १३९ ॥
तत्पूर्वकालिके हित्वा भुक्तौ सत्यां गते फलम् ।
तादृक् स्यादिति संस्कारोद्दसात् कर्णाद्दिशाधिकः ॥ १४० ॥
निष्पन्नराशेः कर्णे न गते दोःफलमौर्विका ।

ज्यां प्रोज्झ्या तत्त्वयमलैर्हत्वा तद्विवरोद्धृतम् ॥ १४१ ॥
संख्यातत्त्वाश्विसंवर्गे संयोज्य धनुरुच्यते ।
इति क्रिया यदा तत्र तत्त्वाश्विभ्यः फलं लघु ॥ १४२ ॥
यज्ज्याखण्डफलं यावत् तावत् तत्त्वाश्विसङ्गुणम् ।
तज्ज्याखण्डोद्धृतं भुक्तेः फलं लिप्तादिकं भवेत्॥१४३॥
यथा ग्रहफलं यत्र तद्गतौ च गते फलम् ।
तथाऽन्यथा त्वृणफलं वक्रभुक्तिस्त्वृणाधिके ॥ १४४ ॥
भुजज्याक्षीयमाणत्वादत्यल्पश्रवणस्य च ।
प्राल्पयते च गत्यल्पं पूर्वाह्नादुत्तरे दिने ॥ १४५ ॥
भुजस्य वर्द्धमानत्वादत्यल्पश्रवणस्य च ।
पराह्नादौ महद्दृष्टं पूर्वाह्नादुत्तरे दिने ॥ १४६ ॥
अतो वक्रानुवक्रेति परपूर्वार्द्धयोः क्रमात् ।
प्रत्यग्गतेर्ह्रासनिष्ठौ वक्रीत्या त्वन्वहं गतौ ॥ १४७ ॥
मन्दमन्दार्द्धयोः कार्यं स्याच्छेदत्वादवक्रता ।
अर्द्धितत्वात् फलस्यैव शीघ्रार्द्धे मुनिसत्तम ॥ १४८ ॥
दूरस्थिताच्च शीघ्रोच्चाद्ग्रहः शिथिलरश्मिभिः ।
सव्येतराकृष्टतनुर्वक्रभुक्तिर्भवेदिति ॥ १४९ ॥
नाकृष्यन्ते हि शीघ्रार्द्धादाकृष्यन्ते ग्रहा इति ।
विशेषोऽस्तीति चेन्नित्यं तत्तद्भागग्रहादिह ॥ १५० ॥
अर्द्धितत्वात् फलस्यैवमित्युक्तं कारणं त्विह ।
इति चेद्वक्रभुक्तिश्च किं न स्यात् तादृशे [illegible]

यतो न रश्मिशैथिल्ये वाङ्मात्राद्दृश्यय. किल ।
चुम्बकभ्रमकन्यायेनोच्चाभिमुखमेव च ॥ १५२ ॥
क्षय याति ग्रहो भुक्तिस्तयुत्तयनुगुणा भवेत् ।
उपचारः सर्वमन्यन्मुखेयमिति हि स्थितिः ॥ १५३ ॥
शीघ्रश्लांशानुरूपं विप्रकर्षः प्रकल्प्यते ।
शीघ्रोच्चात् सप्तमे भौम. शुक्रो ज्ञेयस्तथाऽष्टमे ॥ १५४ ॥
शनैश्चरस्तु नवमे वक्रिणस्ते त्वविक्रमः ।
षट्के च पञ्चके तद्वच्चतुर्थे मुनिसत्तम ॥ १५५ ॥
अष्टौ विंशतिरहोनगजाग्निव्यर्धखेषवः ।
विताशाः सविभागाद्रिरसास्त्यङ्गाय सषट्शतम् ॥ १५६॥
नवाशा नवसूर्याश्च वेदेन्द्राः शरवाणभूः ।
खात्यष्टिः खधृतिर्गोऽतिधृतिर्विश्वाश्विनस्तथा ॥ १५७ ॥
वेदाकृतिर्गोद्विरसाः कश्चिद्रसा युगार्थदृक् ।
खोत्कृतिस्त्र्यंशहीनागरसदृसा. षडन्तिदृक् ॥
खगोऽश्विनः खदन्ताः षड्दन्ता शैलगुणाग्नयः ॥१५८॥
मेषाद्यश्व्यादिमध्याख्याः षडंशोना' खषड्गुणाः ।
त्रिचिषट्पञ्चवह्नीन्दुद्वियोऽर्धाधदृक्शराः ॥ १५९ ॥
शरेन्दुभूद्विवह्नित्रिगो वेदाश्विवह्नय (?) ।
शराः शतं द्विद्विरदास्तारासंख्या' स्वरश्विभात् ॥१६०॥
पुनर्वसूत्तरर्क्षे तु दक्षिणार्क्षे च नारद ।

---

ऽश्विवेदाश्विवह्नय इति—पा० २ पु० ।

प्राङ्गामपि वाऽश्विन्योः सहायमुपकारणे ॥ १६१ ॥

| नक्षत्राणि | अ | भ | कृ | रो | मृ | आ | पु | पु | आ | म | पू | उ | ह | चि |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ध्रुवकाः | ८ | २० | ३७ | ४९ | ६३ | ६७ | ९३ | १०६ | १०९ | १२९ | १४६ | १५५ | १७० | १८० |
| | ० | ० | ३० | ३० | ० | २० | ० | ० | ० | ० | ० | ० | ० | ० |
| तारासंख्याः | ३ | ३ | ६ | ५ | ३ | १ | २ | ३ | ५ | ५ | २ | ५ | ५ | १ |
| शरांशाः | १० | १२ | ५ | ५ | १० | ९ | ६ | ० | ७ | ० | १२ | १३ | ११ | २ |
| | उ | उ | उ | द | द | द | उ | उ | द | उ | उ | उ | द | द |

| नक्षत्राणि | स्वा | वि | अ | ज्ये | मू | पू | उ | अ | श्र | ध | श | पू | उ | रे |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ध्रुवकाः | १९९ | २१३ | २२४ | २२९ | २४१ | २५४ | २६० | २६६ | २८० | २९० | ३२० | ३२६ | ३३७ | ३५९ |
| | ० | ० | ० | ० | ० | ० | ० | ४० | ० | ० | ० | ० | ० | ५० |
| तारासंख्याः | १ | २ | ३ | ३ | ९ | ४ | ४ | ३ | ३ | ५ | १०० | २ | २ | ३२ |
| शरांशाः | ३७ | १ | ३ | ४ | ९ | ५ | ५ | ६० | ३० | ३६ | १ | २४ | २६ | ० |
| | उ | द३० | द | द | द | द३० | द३० | द | उ | उ | द३० | उ | उ | उ |

अश्वयोनिक्षुरप्रख्यं शकटैणशिरोनिभम् ।
माणिक्यगृहचापाभं चक्राकारसन्निभम् ॥ १६२ ॥
द्वे पर्यङ्कनिभे हस्तो मुक्ताविद्रुमसन्निभम् ।
तोरणं बलिसङ्काशं कुण्डलं सिंहपुच्छवत् ॥ १६३ ॥
शर्य्याशरद्राभं च तथा शय्यानिभं मृतम् ।

गजकर्णाकृतिः कर्णः शृङ्गाटकनिभोऽभिजित् ॥ १६४ ॥
मृदङ्गसदृशं तद्वत् वृत्ताकारं तथा पुनः ।
उभे शय्यानिभे तद्वन्मृदङ्गसदृशं पुनः ॥ १६५ ॥
अश्विन्या तुरगाभं तद्वन्मूलेऽप्यन्यदार्थिकम् ।
आषाढद्वितयं चैव योगताराऽथ वक्ष्यते ॥ १६६ ॥
उत्तराचित्रसौम्यानां मध्यमात् त्रिभमेव हि ।
ब्रह्मादित्यभदैत्यानां प्राची हस्तस्य वायवी ॥ १६७ ॥
पश्चिमा तु द्वितीया च श्रविष्ठायाश्च पश्चिमा ।
पितृपौष्णयमाग्नीनां श्रवणाभिजितोस्तथा ॥ १६८ ॥
मूलार्द्रीभार्धसप्तांशे स्वस्थानात् प्रागवस्थिता ।
दृश्यते यस्य तस्यास्ति न स्वप्नेऽपि शिवस्मृतिः ॥ १६९ ॥
यत्र यावत्तु विचिप्तास्तारा अंशेषु वेधसा ।
मयैव तत्र यावन्तो विक्षेपांशा उपग्रहाः ॥ १७० ॥
द्विदेवादृत्रयं स्वर्तुस्वष्टार्को हि प्रचेतसः ।
स्वक्रान्तेर्दक्षिणस्थानात् तदन्येभ्यस्तथोत्तरे ॥ १७१ ॥
आगाऽर्कपञ्चवाणाशा नवषट्खाद्रिखांशुमान् ।
विश्वेशहस्तसप्ताग्निरध्यर्धत्रिकृतान्तकाः ॥ १७२ ॥
व्यर्धतर्काः शराः षट्त्रिंशत् षट्त्रिंशदेव हि ।
अध्यर्धशत्युत्कृतिः खं विक्षेपांशाः स्वुराश्विभात् ॥ १७३ ॥
क्षेपार्धांशो वारुणस्य क्रायायाभिन्नमद्भुतः ।
विक्षेपा दक्षिणेऽशीत्यामगस्त्यो मिथुनं गतः ॥ १७४ ॥

मिथुनांशे मृगव्याधो विंशे याम्ये नभोऽर्ध्वगैः।
हुतभुग् ब्रह्महृदयौ वृषे द्वाविंशभागगौ ॥ १७५ ॥
अष्टाभिस्त्रिंशता चैव विक्षिप्तावुत्तरेण तौ।
पूर्वस्यां ब्रह्महृदयात् पञ्चांशैस्तु प्रजापतिः ॥ १७६ ॥
सौम्येऽष्टत्रिंशदंशैस्तु निर्दिश्यः सर्वदा मुने।
उत्तरांशैरपांवत्सश्चित्रायां पञ्चभिस्तथा ॥ १७७ ॥
आपस्ततोऽधिकः स्वल्पे षड्भिरंशैस्तदुत्तरे।
यदेशादौ-तदाऽन्यस्मिन् ज्ञाते तारागणेऽपि च ॥ १७८॥
फलाभावात् न तं सर्वमुत्सहे कथितुं मुने।
युगादौ विष्णुतारायाः क्रतुर्भागैः समाश्रितः ॥ १७९ ॥
प्राच्यां विश्वस्तैः पुलहः पुलस्त्योऽतो दशांशकैः।
अत्रिस्तत्त्रिभिर्भागैरङ्गिरा त्वष्टभिस्ततः ॥ १८० ॥
वसिष्ठः सप्तभिस्तस्मान्मरीचिर्दशभिस्ततः।

तत्पश्चाच्चलितं चक्रमुपचारोऽयमित्यपि ॥ १८५ ॥
तत्तत्पश्चाद्ग्रहक्रान्तिप्रसङ्गाद्द्विदृग्लवाः ।
ततोऽन्यथाऽथ प्रत्यब्दं किञ्चित् किञ्चिद्व्रजन्ति हि ॥१८६
तत्तत्पश्चाद्ग्रहक्रान्तिप्रसङ्गेऽपि निजास्पदात् ।
पश्चिमांशक्रमप्राप्ते प्राक् चक्रं चलितं स्थितम् ॥ १८७ ॥
यावत्स्वस्वादिनिर्दिष्टस्थानं तावत् प्रयान्ति ते ।
भाद्येषु चरतां तेषामन्तरांशास्तदास्पदात् ॥ १८८ ॥
तत्तत्प्रागंशकक्रान्तिप्राप्तेः स्यात् प्राग्ग्रहस्य च ।
प्राक् चक्रं चलितं चेति नारदैवोपचर्यते ॥ १८९ ॥
प्रागंशक्रमसम्प्राप्ते प्राक् चक्रं चलितं भवेत् ।
प्राक्पश्चाच्चलनांशोनाः स्वर्णं स्याद्भास्करादिषु ॥ १९० ॥
क्रान्तिकोलम्बलग्नानां साधनं द्युगतं द्वयोः ।
स्फुटार्थमयनार्थं च प्रत्यहं द्युदयास्तयोः ॥ १९१ ॥
यद्दिने यस्य कन्या च तत्र तेषां प्रवृत्तितः ।
इत्येतदेकं चलनं प्राक् युगे तानि च षट् शतम् ॥१९२॥
युक्त्याऽयनग्रहस्तस्मिंस्तुलादौ प्राक्चलं भवेत् ।
यद्वा तच्छुद्धचक्रे वा मेषादौ प्राक्चलं भवेत् ॥१९३॥
अयनांशास्तद्भुजांशास्त्रिघ्नाः सन्तो दशोद्धृताः ।
प्राक्प्रत्यक्चलनं चक्रस्यैवेति मनुते तु यः ॥ १९४ ॥
चलांशसंस्कृतस्तस्य ग्रह एव स्फुटग्रहः ।
अनभ्युपगमादेतस्योपचारश्च चेदिति ॥ १९५ ॥

दोर्ज्या त्रिज्या क्रान्तिजीवा चेत् सप्ताङ्कगुणोन्तृयः।
चापक्रान्तिरुदग्याम्या चक्रपूर्वापरार्धयोः ॥ १९६ ॥
सा तुल्यभिन्नदिक्क्षेपयुतोना स्यात् स्फुटा च दिक्।
एवोभयोरधिकदिग्बाणोऽयमितरस्य च ॥ १९७ ॥
स्वभोगगत्वात् पातानामपसव्यं ययुर्ग्रहाः।
प्राक्पश्चार्धगतः पातो ग्रहाद्भ्रामयति ग्रहम् ॥ १९८ ॥
याम्योत्तराणाभिमुखं केन्द्रदोर्ज्या च पूर्ववत्।
क्रान्तेः पूर्वे वा प्रार्धे याम्यक्षेपो यदेष्यति ॥ १९९ ॥
पातं संशोध्यापकव्यात् केन्द्रदोर्ज्या च विद्धि भेः।
दोर्ज्या त्रिभज्या चैकाशीत्यंशकाः परमं ययुः ॥ २०० ॥
विक्षिप्यते राहुणा तु दोर्ज्या क्रान्तिलवाश्रया।
तन्नवांशं द्विगुणितं जीवस्त्रिगुणसूर्यजः ॥ २०१ ॥
बुधशुक्रार्कजाः पातैः विक्षिप्यन्ते चतुर्गुणम्।
दृशभ्रचिबनाङ्कार्करसाकोर्काहृतस्य च ॥ २०२ ॥
बिम्बस्य पातबिम्बत्वात् क्षेपस्तद्वनुरुच्यते।
त्रिगुणास्त्वंशकैर्भक्तास्त्रिज्यार्धं बिम्बयोजनम् ॥ २०३ ॥
दस्रादीनां स्फुटं नास्ति स्फुटं ताराग्रहस्य तु।
इन्दोरपि समीपत्वान्नैवं स्याद्बिम्बयोजनम् ॥ २०४ ॥
रूपसाम्यात् समीपत्वादन्येषां भगणस्य च।
समानन्यायतापत्तिः कक्षाभेदान्न सा सती ॥ २०५ ॥
अपक्रमात् सविपान्ते दृश्यन्ते खचरा यतः।

क्रान्तिमित्य पुरः चेष्ट पश्चादेतीति चेत् ततः ॥ २०६ ॥
उभयानुगुणं शुद्धक्रान्त्यन्ते खेचरो व्रजेत् ।
नान्यथापत्तिरित्येवं प्रोक्ता शङ्का निरास्पदा ॥ २०७ ॥
दो:कोट्योरिष्टजीवोना त्रिज्याऽन्या क्रममौर्विका ।
चक्रक्रान्तिमहीकक्षामानेच्छाफलमित्युत ॥ २०८ ॥
त्रिज्यादृग्ज्ञघनस्थानं क्रान्तिदिक्षं विनिर्दिशेत् ।
तस्मिंश्चक्रविशालार्थं क्रान्तिकोट्युत्थमौर्विका ॥ २०९ ॥
स्वाहोरात्रार्धकर्णः स्यादिनव्यासदलं मुने ।
स्वाहोरात्रार्धमित्यार्यैरुच्यते नामभिस्त्रिभिः ॥ २१० ॥
क्रान्त्यैति यावत् तावत् तु व्यक्षादोजपदेऽत्यया ।
तन्मेरुमध्यात् तावती स्वाहक्रार्धस्य तावती ॥२११॥
यावती युगमक्रान्तिस्तावती रात्रिरुच्यते ।
अन्यद्दिवाऽत्र तन्मेरुः परो मेरुरितीरितः ॥ २१२ ॥
मेरुर्यां मेरुकक्षायां भागे पञ्चदशे मुने ।
यिलीमैनायनान्ते तु सुरासुरविभागयोः ॥ २१३ ॥
नाडीषष्ट्या सदाहर्नाडीषष्ट्या सदानिशा ।
तदन्तरे स्थलुलोकः क्वचिद्दृष्टिर्दिवानिशोः ॥ २१४ ॥
तथैव घटिकाषष्ट्या ते यत्सर्वं यथोदितम् ।
दारुभिर्विषुवत्कक्षाकान्तिकक्षा उभे अपि ॥ २१५ ॥
आधारकक्षा क्षितिज मण्डलं चक्रकैः समाः ।
राश्यंशकक्षा पट्तिस्र उदक् तिस्रस्त्वपागती. ॥२१६॥

कृत्वा तद्द्दिनव्यासदलैर्बद्ध्वा यथोचितम् ।
आधारकक्षयोर्योगो ध्रुवयोः स्थानमत्र तु ॥ २१७ ॥
रथचक्रविले मेरुदण्डद्वीपाद्रिसागरैः ।
नदीभिः पत्तनपुरैर्भूगोलेन युतेन च ॥ २१८ ॥
क्रान्तिकक्षाश्चतुःषष्टिस्ततो वृत्तेन सर्वतः ।
मध्योन्नतं प्रसार्याग्रे उभयत्र विनिर्गते ॥ २१९ ॥
यथा भुवौ ध्रुवसमौ तत्रयोः स्थापयेद्ध्रुवम् ।
कक्षाभिर्मध्यकक्षाद्यैर्भुवद्वयगतैरपि ॥ २२० ॥
विभज्य गोलं द्वादशधा मेषादीन् निर्दिशेत् समान् ।
तुलामेषादितः कर्किमृगादि च लवद्वयोः ॥ २२१ ॥
सन्मुखाधारकक्षायां योगकक्षां प्रवेशयेत् ।
क्रान्तिमध्या तिर्यगेवं तुलामेषादितः सुत ॥ २२२ ॥
खाधारं ध्रुवयोः कक्षा मध्यस्था क्षितिजाभिधा ॥
अक्षांशमानोपरिष्टाद्योजयेत् तन्न सुसमम् ॥ २२३ ॥
आच्छाद्य शुक्लवस्त्रेण निर्दिश्यांशांश्च नाडिकाः ।
मेषोन्नतस्थानतस्तु तच्चक्रक्रान्तिमस्तके ॥ २२४ ॥
नतं वियच्चरं स्थाप्यं कालयन्त्रेश्च कालवित् ।
सूर्योद्दिनगतैः सूत्रैर्नयेदुदयस्तुलात् ॥ २२५ ॥
क्षितिजादुदयं लग्नं तद्दशाच्च खमध्यगम् ।
अस्तं गच्छंश्च विज्ञेयः सर्वं प्रत्यक्षतामियात् ॥ २२६ ॥
यन्त्राऽचला मही मेरुभुवौ क्षितिजमण्डलम् ।

चवटस्थमधोभागं चितिजादत्र कारयेत् ॥ २२७ ॥
उपर्यधोगता नाडयः चितिजाः स्युरहर्निशोः ।
साचे चक्रस्य तिर्यक्त्वादुदयस्थो ह्युत्तरम् ॥ २२८ ॥
क्षपा सञ्चरतोऽल्पा स्याद्दनल्पं दिनमात्मन ।
अन्यदेतस्य संयातुर्लङ्काचितिजमण्डलात् ॥ २२९ ॥
अत ऊर्ध्वं प्राग्दृष्ट्या चितिजात् तादृशात् खगात् ।
एवं सत्युत्तरक्रान्तौ विंशतोऽल्पाधिकं दिनम् ॥ २३० ॥
पूर्वापरामरांशे तु याम्यक्रान्तौ विपर्ययात् ।
अचच्छया हादश चेन्मेषादिचितिजान्तरम् ॥ २३१ ॥
क्रान्तिज्यालघुकचाया तत्चितिज्येति चोच्यते ।
तच्चापार्धं दिनव्यासदलं त्रिज्येति कल्प्यताम् ॥ २३२ ॥
सा विशिष्टा चरज्या च चरप्राणा हि तद्धनुः ।
नाडयः पञ्चदशैतेन द्युचपार्धादिसंस्कृताः ॥ २३३ ॥
दिनचिये तद्द्विगुणे षष्टिरेव तयोर्युतिः ।
कचायामधिकाल्पायां महत्यल्पाश्च नाडिकाः ॥ २३४ ॥
महान्तोऽल्पास्तथांशा यद्देपुवत्यां ततोऽधिकाः ।
भागतकचासु पट्स्वल्पास्तोकास्तोकेन नारद ॥ २३५ ॥
तदैवेदं भवेदोजपदे चिप्त्वाऽऽदितोऽन्यथा ।
अनोजपदमेष्वेव दुःसाध्यत्वाच्च कस्य चित् ॥ २३६ ॥
युक्तिसिद्धैव कचाणां कल्प्यं व्यासदलं समम् ।
इष्टयुभुक्तिकर्णार्धमेकद्विनिममौर्विकाः ॥ २३७ ॥

फलं चापानुरूपं तत् तत्काचासु प्रकल्पताम् ।
अहोरात्रार्धकर्णैः स्यात् तस्य तस्य मितिर्भवेत् ॥२३८॥
इच्छायामन्यकक्षायां त्रिज्या त्रिज्याधिका न तत् ।
इच्छाकक्षाचापखण्डा मेषाल्लङ्कोदयासवः ॥ २३९ ॥
खागाष्टयोऽर्थगोऽग्नैकाः शरत्र्यङ्कहिमांशवः ।
कर्कटान्ते विलोमेन तुलायाः पश्चिमे महत् ॥ २४० ॥
अनल्पा राशयोऽन्योन्यं तल्लग्नादोदशा अपि ।
मध्यप्रान्तमहावायुखण्डवायुवशाद्गतिः ॥ २४१ ॥
शीघ्रमन्दाश्रयान् खेटान् दर्शयेत् . समसत्वरान् ।
मध्यामध्यमहाखल्पमार्गाभ्यां भ्रामकं समम् ॥ २४२ ॥
सर्वेषां चिवमस्तीति सा ग्रहाऽस्तु तदेव च ।
खेचारिणः खगा. खेटाः खेचराश्च वियच्चराः ॥ २४३ ॥
इतीह व्यवहारोऽयमृषीणां महतां मुने ।
पूर्णं मेषादिभिर्गोलं चक्रं स्यान्न तु चेन्न तत् ॥२४४॥
ग्रहमैत्रादिवद्भावा मेषाद्या हि प्रकीर्त्तिताः ।
वस्तुहत्तेन मेषाद्या ग्रहमैत्रादिवन्न हि ॥ २४५ ॥
व्यक्षादुत्तरतस्तत्तदुत्तरोत्तरतो नतम् ।
पार्श्वयोः क्षितिजं व्यक्तं क्षितिजादुत्तरे दले ॥ २४६ ॥
तथा दक्षिणचक्रार्धे दृश्यते ह्यन्यथा मुने ।
तावत्प्रतीत्यै क्षितिजं तत् तावदुभयास्पदम् ॥ २४७ ॥
कल्प्या निरक्षाः क्षितिजप्रकारस्थानतस्ततः ।

उत्तरोत्तरतोऽधोऽधो मृगषट्कमुदेति हि ॥ २४८ ॥
निःशेषं स्वोदयस्थानं पश्चात् स्पष्टेन गच्छति ।
अतो मृगाद्याः षट् स्वस्वचरखण्डविवर्जिताः ॥ २४९ ।

स्वोदयाः कर्कटाद्यास्तु
दृश्यन्ते षट् ततोऽन्यथा ।
तत्कालक्रान्तिकच्चातो
राशीनां चितिजात् स्वकात् ॥ २५० ॥

उदयास्तमयानेव स्वकार्येणान्यथा यतः ।
लग्नानयनवेलायां संस्कारोऽत्रायनस्य च ॥ २५१ ॥
दृष्टतः क्रान्तिकच्चातो यदन्यत् तदपीह तत् ।
मर्त्यलोकोत्तराधाच्योरब्धा सप्तविंशतिः ॥ २५२ ॥
तयोर्मृगाद्याः कर्काद्या युगपत् षष्टिदर्शनात् ।
अतो देवासुरांशे तु व्यस्तलग्नाहिनं क्षपा ॥ २५३ ॥
मर्त्यलोके गणयेन्नैतदेवं महामुने ।
यद्राशिस्थो यत्र दृष्टस्ते मासास्तत्र दृश्यकाः ॥ २५४ ॥
तद्राशिस्तदृक्षः प्राणास्तस्य भुक्तेः कलीकृतेः ।
अधिकात्वं लङ्कोरात्रं ताराहोरात्रतो भवेत् ॥ २५५ ॥
नाक्षत्रनाडस्ता नाडयस्तासु स्वर्षं चरं यदि ।
कुर्वीत चरनाडीयं प्रोक्तं तन्मानजं फलम् ॥ २५६ ॥
दृष्ट्वा तत्तदहोरात्रं नाक्षत्रं मानमित्यथ ।
षष्टिघ्नं तत्र नाक्षत्रं संस्कुर्यात् तादृशे मुने ॥ २५७ ॥

स्वाहोरात्रचतुर्भागे नाचवं द्युचपादलम् ।
सौरे नाड्यो भुक्तिसिद्धास्तत्तन्नाड्योऽन्यथोद्भवाः॥२५८॥
ग्रहोदयानतरं यदिस्तन्नाचत्रदिनान्तरम् ।
भवन्ति फलमानेच्छास्तास्ताश्चार्क्षी नाडिकाः स्मृताः॥२५९॥
नाचत्रनाड्यः कथने सौरास्तात्कालिकागमे ।
छायालग्नागमे तत्तन्नाड्यो ग्राह्या इति स्थितिः ॥२६०॥
अनुक्तं रोमशेन्द्वर्कैराद्यैस्तत्तत् स्मृतं स्वतः ।
इत्येवं कथितं पुत्रान्यद्दे शृणु समाहितः ॥ २६१ ॥

इति श्रीशाकल्यसंहितायां द्वितीयप्रश्ने ब्रह्मसिद्धान्ते
द्वितीयोऽध्यायः ॥ २ ॥

तिथयस्त्रिंशदृक्षाणि सप्तविंशतिरेव हि ।
तावन्तो भगणे योगाः करणानि नभोरसाः ॥ १ ॥
अर्कोनचन्द्रलिप्ताभ्यस्तिथयः करणानि च ।
ग्रहस्य भानि सार्केन्द्वोर्योगाः स्वर्योगभाजिताः ॥ २ ॥
प्रवेशनिर्गमौ भोगस्तेषां तावन्मुहुस्तदा ।
तौ कार्यौ वर्तमानानां तत्तन्मध्यस्फुटग्रहैः ॥ ३ ॥
मासादिकरणं हित्वा किंस्तुघ्नं स्थिरसंज्ञितम् ।
तिथ्यर्धराशेः सप्तैव ववादि चरसंज्ञितम् ॥ ४ ॥
मासेऽष्टशल एकैकं वर्तते करणं परम् ।
स्थिराणि चोणि मासान्ते शकुनं च चतुष्पदम् ॥ ५ ॥
नागस्तदनु कृष्णायाश्चतुर्दश्याः परार्धतः ।

पूर्वापरार्धजा विष्टिर्विष्टिरेव दिवानिशोः ॥ ६ ॥
सा त्याज्या त्वन्यया भद्रा सर्वकर्मसु भद्रदा ।
पुच्छाख्या दशमे विध्या अपि चैतच्छुभावहा ॥ ७ ॥
सा कृष्णाऽत्युन्नता स्थूला ह्यनुगण्डस्थला मुने ।
उग्रगण्डा दीर्घनासा वह्निनेत्रा महोदरा ॥ ८ ॥
क्रोडी च भीकराकारा सर्वारिष्टकरी सदा ।
लाङ्गूलिनी वह्निलचक्षुर्ज्झिरन्ती विषाञ्जगत् ॥ ९ ॥
सर्वं व्याप्नोति पातोऽपि तद्रूपस्तत्क्रियः पुमान् ।
द्विपादपुच्छ एवासौ संज्ञाभेदेन वैधृतः ॥ १० ॥
सप्तादशे सप्तविंशे योगे च सह वर्त्तते ।
क्वचिच्च तस्मात् प्रबलः क्वचित् तस्मात् सुदारुणः ॥११॥
चलांशसंस्कृतार्केन्द्वोस्तदसंस्कृतयोस्तु वा ।
भिन्नैकायनगतयोर्युतौ भार्धेन मण्डले ॥ १२ ॥
क्रान्त्योस्तौल्ये क्रमात् पातो वैधृतश्च सुदारुणः ।
विषुवत्क्रान्तिसाम्याद् द्विर्यदा स्याद्विधास्तदा ॥ १३ ॥
द्वितीयप्रबलः पातो द्विर्भवेदिति निश्चयः ।
क्रान्त्याऽभिचरतोरेव भास्करेन्द्वोः परस्परम् ॥ १४ ॥
तावदेवास्य पातोऽयं व्यतिपातोऽयमित्युत ।
अयं प्रसिद्धोऽतस्तावदेवास्यापि च संभवः ॥ १५ ॥
परस्परं वा चरतोरर्केन्द्वोः प्रबलोद्भवः ।
स्यात् तदर्धोक्तविषुवे चलसंस्कृतसंभवे ॥ १६ ॥

अर्केन्द्वोः पथिके क्रान्तिस्तद्विदा तद्विधे गतौ ।
अपि ग्रहस्यैव कल्प्ये प्राग्गतिश्चेति वक्रता ॥ १७ ॥
मन्दाधिकोनभौमे स्यात् तद्योगो गतगम्यजः ।
अवक्रिणोर्द्वयोरेवं वक्रिणोस्तु विपर्ययात् ॥ १८ ॥
प्राग् गत्याऽत्यधिकेऽतीतो भावी हीने तु वक्रिणः ।
गत्यन्तरेण तद्वक्रादनुलोमविलोमयोः ॥ १९ ॥
दिनादि वक्रिण्येतस्मिन् भुक्तियोगेन नारद ।
तात्कालिकौ ग्रहौ तेन छेद्यमिच्छामितिर्हरः ॥ २० ॥
स्वभुक्तौ फलमिष्टं वा तौ भवेतां मुहुर्मुहुः ।
क्रान्तेर्दिनादि गणयन् क्रान्तिसाम्यं विचारयेत् ॥ २१ ॥
क्रान्तिर्यदाऽपनीतेन्द्वोः स्फुटक्रान्तिर्गतैष्यजा ।
कल्पोजयुग्मपदगा युग्मौजपदगेति हि ॥ २२ ॥
सूर्यक्रान्त्यधिकोनेन्द्वोः शोध्यक्षेपात् तदा तु सा ।
पात ओजपदोत्था वेद्यामं त्वन्यपदोद्भवा ॥ २३ ॥
परमक्रान्तिजीवाघ्नी क्रान्तिज्या विज्यया फलम् ।
तच्चापान्तरमर्धं वा ग्रहाल्पं गौतगो. फलम् ॥ २४ ॥
तत्संस्कृतेभ्यः क्रान्ती ते समे यावत् पुन. पुनः ।
उपक्रमोपसंहारग्रहान्तरकलादिकम् ॥ २५ ॥
तद्भक्त्या परमे हीने भावी पातो गतोऽधिके ।
पातश्च मध्यकालश्च क्रान्तिसाम्यमथापि वा ॥ २६ ॥
चतुःशती शताल्पो वा ततोऽनल्पार्धमत्र वा ।

क्रान्तिगत्यन्तरं षष्टिर्मानैक्यार्धमितिः फलम् ॥ २७ ॥
इच्छाख्यित्यर्धनाड्यः स्युस्तयोः काले च मध्यमे ।
निर्गमश्च प्रवेशश्च पातस्याथ विबुध्यताम् ॥ २८ ॥
भयोरैक्यं चान्तरं वा गत्यन्तरमितीरितम् ।
न चेत् क्रान्त्यन्तरं वाद्यौ त्वन्तरैक्यं न मानयोः ॥२९॥
स्यादेतत् प्रथमप्रश्ने तूष्णीं गत्यन्तरं यतः ।
कथितं तत्क्रान्तिभुक्तौ गत्यैक्यं च न संस्थितिः ॥ ३० ॥
एवं चेद्ग्रहयोर्मध्यं मानैक्यार्धं भवेद्यये ।
स्यात् तदा समलिप्तौ तौ मध्यकालौ यदाऽपि च ॥३१॥
क्रान्तिर्न कारणं यस्मात् तस्मादेतन्न संमतम् ।
उपायः क्रान्तिसाम्यार्थं कश्चिदत्र निरूप्यते(१) ॥ ३२ ॥
तत्र स्नानेन दानेन दत्तश्राद्धजपादिभिः ।
यत् प्राप्यं सुमहच्छ्रेयस्तत्कालज्ञानतोऽपि च ॥ ३३ ॥
अविशेषेण सर्वाणि नक्षत्राणि व्रतानि तु ।
रात्र्यर्धव्यापिनक्षत्रे कुर्याद्वा तदुपस्थिते ॥ ३४ ॥
सर्वत्र याः संनिहिता नाड्यस्तास्ताः सुपुण्यदाः ।
त्रिधा विभज्य रात्रिं तां मध्यांशे यत्र तारकम् ॥ ३५ ॥
उपोषितव्यं यद्यत्र येनास्तं याति भास्करः ।

---

(१) २ पुस्तकेऽधिकः पाठः ।
दिग्भेदेऽपीति दिक्तौल्यमेतावत् कल्पमेव च ।
प्रज्वलज्ज्वलनाकारे काले यावत पतत्यसौ ॥

श्रोणा श्रविष्ठया युक्ता ग्राह्या तु द्वादशीव्रते ॥ ३६ ॥
ज्येष्ठा श्लेषा रेवती च पादा अन्त्या भसन्धयः ।
तेषां च तत्परर्क्षाणामन्त्या आद्याश्च षोडश ॥ ३७ ॥
भसन्धयश्च गण्डान्ताः सर्वकर्मसु वर्जिताः ।
यथैव लग्नगण्डान्ते नास्ति जीवे विनिर्गतिः ॥ ३८ ॥
तथैव तिथिगण्डान्ते नास्ति दौर्बल्यशालिनी ।
प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रतेषु च ॥ ३९ ॥
अभावे द्विगुणच्छायाव्यापिन्यां काल ईदृशे ।
दिवा नक्तं चरेद्वाव्यापिन्यां वा तथा ततः ॥ ४० ॥
उपवासदिने रात्रौ स्यान्नक्तं हरिवासरे ।
एकभुक्तेन नक्तेन तथैवायाचितेन च ॥ ४१ ॥
उपवासेन दानेन मन्वधा द्वैशिको भवेत् ।
व्रतं चैव द्विजो भोक्ता न (१)याचेत व्रतं ततः ॥ ४२ ॥
मध्याह्नव्यापिनी तद्वदेकभुक्तव्रतं प्रति ।
उपवासदिनेऽप्येवं पूर्वाह्णव्यापिनी मुने ॥ ४३ ॥
द्युरात्रव्यापिनी ज्येष्ठा व्रते सा तदुपस्थिता ।
ज्येष्ठोपवासे पूर्वविद्धा सा ग्राह्या चास्तगामिनी ॥४४॥
तदैक्ये परविद्धा सा क्षीयमाणेन तन्मतम् ।
श्रोजयुग्मे तिथिः पूर्वा परविद्धा च पक्षयोः ॥ ४५ ॥
व्रतोपवासादौ ग्राह्या वृद्धिह्रानौ च कारणम् ।

(१) न याचेत कुत्रचित् इति २ पु० पा० ।

पूज्या स्वल्पाऽपि सर्वत्र या तिथिर्वृद्धिगामिनी ॥ ४६ ॥
महत्यपि न सा पूज्या या तिथिः क्षयगामिनी ।
व्रतादौ त्रिमुहूर्त्ताऽपि स्वीकार्या वृद्धिगामिनी ॥४७॥
तत्र व्रतादि कुर्वीत वृद्धिह्रासादिकारणम् ।
यदा पक्षक्षयं याति तदा स्यादापराह्णिकी ॥ ४८ ॥
उदयास्तगता पूज्या तिथिर्वृद्धिक्षये तिथेः ।
व्रतस्वीकरणे चैतदुक्तं श्लोकचतुष्टयम् ॥ ४९ ॥
गृहीत्वोदङ्मुखं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासं तु गृह्णीयाद्यद्वासं कल्पयेद्बुधः ॥ ५० ॥
मैत्रे मुहूर्त्तमेतच्च कार्यं नो चेद्वृथा फलम् ।
आषाढ्याञ्चैकादश्यां याम्यायनदिने तथा ॥ ५१ ॥
चातुर्मास्यव्रतं सर्वं स्वीकार्यं भुक्तिमुक्तिदम् ।
हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ॥ ५२ ॥
ब्रह्मचर्यमधःशय्या नक्तभोज्यं यदाचरेत् ।
दिवानिद्राऽनृतं द्यूतं ताम्बूलं मद्यमासवम् ॥ ५३ ॥
कांस्यं मांसं मसूरं च चणकं कोद्रवं तथा ।
शाकं मधु परान्नं च सुरा चौद्रं च मैथुनम् ॥ ५४ ॥
असत्प्रजल्पनं च लोभं वितथभाषणम् ।
क्षारं प्रतिग्रहं तैलं तिलपिष्टमहंकृतिम् ॥ ५५ ॥
व्यायामं व्यवसायं च कामं क्रोधं मदं तथा ।
दम्भं मोहं च मात्सर्यं तिलमुद्गादिभक्षणम् ॥ ५६ ॥

पुनर्भोजनमभ्यङ्गं परचिंशत्र महामुने ।
उपवासदिनात् पूर्वं परा के च विवर्जयेत् ॥ ५७ ॥
असक्तज्जलपानं च कुर्यात् पूर्वापराह्णयोः ।
एकादश्यां निराहारः स्थित्वा चैव परेऽहनि ॥ ५८ ॥
भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ।
अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ॥ ५९ ॥
प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ।
सङ्कल्प्य पारणं चेति मन्त्राभ्यां क्रमशो मुने ॥ ६० ॥
एकादशीं प्रति स्त्रीणां शूद्राणामप्ययं विधिः ।
त्रयोदशी च दशमी कृष्णप्रतिपदा मुने ॥ ६१ ॥
रात्रिद्वयव्यापिनीं तां स्त्रीकुर्यात् सततं मुने ।
षष्ठिकैकाऽप्यमावस्या स्याच्चेत् प्रतिपदिष्यते ॥ ६२ ॥
सैव व्रतोपवासादौ परविद्धा हि सोत्तमा ।
तृतीया पूर्णिमा तद्वत् पूर्वविद्धा मुनीश्वर ॥ ६३ ॥
द्वमास्विह पूर्वविद्धा अपि वा तदसंभवे ।
द्वादशी पूर्वविद्धैव सर्वदा मुनिसत्तम ॥ ६४ ॥
व्रतादौ पूर्वविद्धैव भवेत् कृष्णा चतुर्दशी ।
कृष्णाष्टमी क्षीयमाणा यद्येतेनान्यथा मुने ॥ ६५ ॥
व्रतादौ क्षीयमाणास्तु परविद्धोऽसितेस्मरः ।
ग्राह्यः शुक्ले वर्द्धमान इति वा नान्यथैव तु ॥ ६६ ॥
शुक्लतृतीया वैशाखे पूर्वविद्धैव साऽन्यथा ।

विनायकचतुर्थी च तथा भाद्रपदेऽमला ॥ ६७ ॥
मध्याह्ने त्वनतिक्रान्ते यद्येवं स्यान्मुनीश्वर ।
स्त्रीशूद्रयोरुपवासे तु तद्विधे तु तदुत्तमे ॥ ६८ ॥
ते चापराह्णव्यापिन्यौ परिशुद्धे सुशोभने ।
दिने पूर्वार्धगामिन्यौ कलयावसरे इमे ॥ ६९ ॥
तयोः सत्योश्चापराह्णव्यापिन्योश्चापि ते न हि ।
तृतीयादौ पदंशं तु पूर्वं व्याप्यैव दूषयेत् ॥ ७० ॥
अपराह्णस्योर्ध्वशुक्ला चतुर्थी नागसंज्ञिता ।
परोपवास एवं चेन्न चेत् पूर्वैव गृह्यते ॥ ७१ ॥
नास्मिन् विचार्ये ह्यानिवृद्धी चतुर्थ्यन्या तु नेदृशी ।
अत्यल्पमुत्तराविद्धा ह्युपवासाय चाप्यलम् ॥ ७२ ॥
तदन्ते पारणं तच्चेत् प्रदोषव्यापिनीति च ।
सर्वमन्यद्व्रतं कार्यं नित्यमेकादशीव्रतम् ॥ ७३ ॥
पुरुषाङ्गना विना यौनिजातिभेदोऽत्र नोच्यते ।
यदा नारी व्रतं कुर्याज्जीवद्भर्तर्युपोष्य चेत् ॥ ७४ ॥
पत्युरायुःक्षयं कृत्वा स्वयं च नरके व्रजेत् ।
यत्पुरुषभोजनात् स्त्रीणां भोजनत्याग एव हि ॥ ७५ ॥
व्रतं शुश्रूषणं तस्य तदाऽऽज्ञापालनं चरेत् ।
कामाकामात् कृतं पापमार्द्रं शुष्केन्धनं क्रमात् ॥ ७६ ॥
भस्मसात् कुरुते वह्निरेकादश्युद्भवो मुने ।
यावन्त्यश्नाति सिक्थानि मोहाद्वा हरिवासरे ॥ ७७ ॥

व्याधितो वाऽपि तावन्ति व्रजेत् पापानि नारद ।
प्राश्येन्नवनीतं वा नैकादश्यां म्रियन्नपि ॥ ७८ ॥
योगिनोऽपि महात्मानो नाश्नन्त्यस्मा व्रते रताः ।
एकादश्युपवासेन म्रियते यदि मानवः ॥ ७९ ॥
क्षुधार्त्तः शिवसालोक्यं गच्छेन्निष्कल्मषं मुने ।
विस्मृत्यैकादशीं मोहाद्द्वादशीमरतः स्थिता ॥ ८० ॥
त्रयोदश्यां द्वादशी तत्र यदिच्छेत् परमं पदम् ।
शोके वा यदि वा मोहे वर्षे वा समुपस्थिते ॥ ८१ ॥
सूतके मृतके वाऽपि न त्याज्यं द्वादशीव्रतम् ।
सूतकान्ते हरिं विप्रान् पूजयेद्भोजयेत् स्वयम् ॥ ८२ ॥
विधिनोपवसेद्विष्णुं विप्रांश्चान्यांश्च पूजयेत् ।
काम्यव्रतेषु सर्वेषु सर्वत्रैवं विधिस्त्वयम् ॥ ८३ ॥
सधाऽपि गणयेत् काम्ये न तथासतमेव तु ।
असामर्थ्यशरीरस्चेत् काम्यव्रतमुपस्थितम् ॥ ८४ ॥
पुत्रेण धर्मपत्न्या वा कारयेन्मुनिवल्लभ ।
पत्नीव्रतं पतिः कुर्यादसामर्थ्ये तयोर्मिथः ॥ ८५ ॥
अन्यथा व्रतभङ्गेन त्वौषधैश्चैव सूतके ।
यः कुर्यात् पुत्रवित्तादिकाम्यमेकादशीव्रतम् ॥ ८६ ॥
आव्रतोद्यापनात् तस्य नामानि त्रीणि नारद ।
पुत्रवान् धनवान् मुक्तः पर्यायात्तेष्वनेकशः ॥ ८७ ॥
दिनत्रयेऽपि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।

एकादश्यां तु कृष्णायां शुक्रार्कदिवसे गृही ॥ ८८ ॥
न पारणां नोपवासं कुर्यात् माते च सम्मतम् ।
एकादशीव्रतस्यैवं लक्षयित्वा यथोचितम् ॥ ८६ ॥
नामभिस्त्रिभिरुक्तैश्च कथान्ते सफलं व्रती ।
उक्तदोषेषु चानुक्तवेधेषु व्रतमाचरेत् ॥ ९० ॥
व्रतं तत्पारणं तत्माकृतिचिसंख्यानि हन्ति च ।
तेषु नक्तं हविष्यान्नमन्नोदनफले तिलम् ॥ ९१ ॥
क्षीराम्बाद्यं पञ्चगव्यं प्राणायाममथं क्रमात् ।
एवं यदैव वा गच्छेदुत्तरोत्तरमुत्तमम् ॥ ९२ ॥
व्रतभङ्गो हि नैवं चेदव्रतं नैक उपस्थिते ।
अन्यं कुर्वीत दानचाहोमैरन्यं च वर्त्तयेत् ॥ ९३ ॥
वानप्रस्थो ब्रह्मचारी सुमुक्षुर्यतिरित्यपि ।
चार्व्यः सर्वाश्रमस्थोऽपि वा कुर्वन् नित्यव्रतं मुने ॥ ९४ ॥
न तस्य सन्त्यक्तदोषो यत्तद्व्रत्यं च नोचितम् ।
परविद्धाऽपि सा कार्या नारदैकादशी तिथिः ॥ ९५ ॥
पूर्वविद्धाऽपि सा ग्राह्या परतो द्वादशी न चेत् ।
शुद्धाऽधिका त्रिद्धसमा चोत्तराऽनधिका यदि ॥ ९६ ॥
पूर्वा पुण्या गृहस्थानां यतीनामुत्तरा स्मृता ।
वृद्धाधिकोत्तरा हीना व्यवस्थेयं यदीप्यते ॥ ९७ ॥
उत्तराऽनुक्तरूपा सा सर्वेषामुत्तरैव चेत् ।
शुद्धहीना शुद्धसमा विद्धहीना च नारद ॥ ९८ ॥

सर्वेषामविशेषेण पूर्वैव फलदायिनी।
फाल्गुनद्वादशी पुष्ययुक्ता गोविन्दसंज्ञिका ॥ ९९ ॥
शुक्ला शुक्ले द्वादशी तु माघे भीमाऽभिधा स्वयम्।
आषाढे शयनाख्या स्यात् प्रबोधाख्या च कार्त्तिके॥१००॥
एकादश्याद् द्वादशीपुण्यं यस्यैता दधुरेकशः।
पारणं द्वादशीविद्धत्रयोदश्यां निहन्ति च ॥ १०१ ॥
द्वादशद्वादशीपुण्यं परार्धायां प्रयच्छति।
सिंहार्के रोहिणीयुक्ता कृष्णा भाद्रपदाष्टमी ॥ १०२ ॥
रात्र्यर्धपूर्वपरगा जयन्ती कलयाऽपि वा।
अभावे रोहिणीयुक्ता नभ कृष्णाऽष्टमी यदि ॥ १०३ ॥
मुहूर्तमपि वा श्रेष्ठा तेनाभावे तिथिर्मता।
कार्या विद्धाऽपि सप्तम्या रोहिणीसहिताऽष्टमी ॥१०४॥
अभावे केवला सा चेदिति वेदविदो विदुः।
मध्यरात्रिगता माघे शिवरात्रिचतुर्दशी ॥ १०५ ॥
कृष्णपक्षे जयन्ती च नोपेक्ष्ये विहिते अपि।
नरस्य द्विगुणा छायामतिक्रम्य यदा रविः ॥ १०६ ॥
तदा सौरं चरेन्नक्तं न नक्तं निशि भोजनम्।
दिनद्वयेऽप्यमावस्या मध्याह्नव्यापिनी यदि ॥ १०७ ॥
पैत्रे दैवव्रते ग्राह्या क्रमात् पूर्वापराऽपि च।
अमा दूष्या भूतविद्धा मध्याह्नव्यापिनी न चेत् ॥१०८॥
ग्राह्या त्वमा भूतविद्धा मध्याह्ने प्रतिपद्यदि।

पूर्वमध्यापराह्णेषु देवमर्त्यपितॄन् यजेत् ॥ १०६ ॥
द्विगुणात्माधिकच्छाये चतुर्थे प्रहरे नरः ।
यः श्राद्धं कुरुते याति नरकं स तदा चिरम् ॥ ११० ॥
अतोऽपराह्णव्यापिन्यां पूर्वस्यां तु तिथिद्वये ।
कुर्वीत पार्वणश्राद्धं सर्वतिथ्यां मते रत ॥ १११ ॥
दिनद्वयेऽपि सा नो चेदपराह्णे मुनीश्वर ।
साऽन्याऽपि परविद्धैव कुरुते स्वस्तिकं ततः ॥ ११२ ॥
शुक्राद्यं शुक्रवारं च त्यजेच्छ्राद्धे स्वजन्मभम् ।
आमश्राद्धे दैविके तु पूर्वाह्णे यहसो निशि ॥ ११३ ॥
पूर्वाह्णे लग्नकाले च हविश्राद्धं विधीयते ।
निशाऽपि पुत्रोत्पत्त्यादिनिमित्तं श्राद्धमिष्यते ॥ ११४ ॥
विना प्रातरादिनार्धादेकोद्दिष्टं विधीयते ।
आमेन वा हिरण्येन श्राद्धं माध्याह्निकं विदुः ॥ ११५ ॥
चतुर्दश्येव वर्ज्या स्यात् काम्ये नित्ये च नैमित्तिके ।
एतयोस्तिथिवारस्तमन्यत् सर्वं च पूज्यते ॥ ११६ ॥
प्रत्यब्दं प्रतिमासं वा क्षताहश्राद्धकर्मसु ।
सायन्त्न्युत्तराभावे पूर्वविद्धाऽपराह्णिकी ॥ ११७ ॥
सायन्तनीयाभावे स्यात् परविद्धैव शस्यते ।
नित्यनैमित्तिकश्राद्धं दर्शश्राद्धादि चेतरत् ॥ ११८ ॥
अधिमासे न कर्त्तव्यं सेवाद्यं देवतादिषु ।
नभस्यकन्यकोर्ध्वार्धभागयोगेऽवधार्यते ॥ ११६ ॥

श्राद्धं त्वपरपक्षाख्यं नभस्यर्धदलेऽन्यथा ।
मीने धनुषि सिंहार्के न व्रतारम्भ इत्यपि ॥ १२० ॥
माघे मासि न सिंहेज्ये चेति केचिन्न तन्मतम् ।
अनेऽन्नदानग्रहणं(?) व्रतं कार्यं मनीषिभिः ॥ १२१॥
सूतके मृतके वाऽपि केचिदार्त्तेव एव च ।
पूर्वं पूर्वः शुभः कालः सूर्यग्रहणसूतके ॥ १२२ ॥
सोमग्रहणकालेषु श्लाघ्यः कालः परः परः ।
नाद्याद्यामत्रयादर्वाग्ग्रहणे चन्द्रसूर्ययोः ॥ १२३ ॥
विमुक्तमण्डलं दृष्ट्वोर्ध्वं वा प्रहरत्रयात् ।
रात्रौ स्नानं न कर्त्तव्यं दानहोमबलिक्रियाः ॥ १२४ ॥
प्रतिष्ठाजातकोद्वाहयज्ञग्रहणवर्जितम् ।
मध्यन्दिने पर्वसन्धिस्तत्र एवमथापि वा ॥ १२५ ॥
याग. स्वदिवसे कार्यः परतश्चेत् परेऽहनि ।
सन्धिश्चेत् सङ्गवादूर्ध्वं प्राक्पर्यावर्त्तनाद्रवेः ॥ १२६ ॥
सा पौर्णमासी विज्ञेया यज्ञकालविधौ विधिः ।
यागात् पूर्वदिने कुर्यादन्वाधानं द्विजोत्तम ॥ १२७ ॥
अन्वाधानं तु सङ्कल्पप्राणायामपुरःसरम् ।
अन्वाधानं पाकहोमं नित्यहोमादनन्तरम् ॥ १२८ ।
कुर्यान्नैमित्तिकं कर्मानन्तरं नित्यकर्मणः ।
पर्वण्यौदयिके कुर्युः श्रावणीं तैत्तिरीयकाः ॥ १२९ ॥
बह्वृचः श्रवणे कुर्युः सद्यसंपत्तिदर्शने ।

विशिष्टः श्रावणो मासः स्वाध्यायनामुपक्रमे ॥ १३० ॥
तद्दर्शोपात्तदर्भैस्तु कुर्यात् कर्माणि वत्सरम् ।
अयने विषुवे चैव शयने बोधने हरेः ॥ १३१ ॥
अनध्यायं प्रकुर्वीत मन्वादिषु युगादिषु ।
कार्त्तिके नवमी शुक्ला तृतीया माधवे तथा ॥ १३२ ॥
माघे मन्वादयः कृष्णे नभस्ये च युगादयः ।
आश्वयुक्शुक्लनवमी कार्त्तिके द्वादशी तथा ॥ १३३ ॥
चैत्रे तृतीया ज्येष्ठस्य पूर्णिमा द्वादशी शुचौ ।
चतस्र फाल्गुने द्वाद्स्यूर्जे कृष्णाऽष्टमी मुने ॥ १३४ ॥
मन्वन्तरादयस्तेषु तेषामेवोद्भवः क्रमात् ।
नभःफाल्गुनयोः पश्चामेका चैकादशी सिता ॥ १३५ ॥
वैशाखज्येष्ठपौषाणां पूर्णिमा फाल्गुनोर्जयोः ।
माघामलद्वादशी च नभस्यामलचन्द्रिका ॥ १३६ ॥
शुचिश्लिंगोऽष्टमी कृष्णा द्वितीया च युगेऽमला ।
मन्वन्तरान्तस्तेषामेष्वनध्यायेषु निर्गमः ॥ १३७ ॥
यथाऽऽगमजनो मन्त्री राजानं प्रतिगच्छति ।
तथा मन्वादयः सर्वे ब्रह्माणमुपतस्थिरे ॥ १३८ ॥
तिस्रोऽष्टका अनध्यायाः समस्याद्या मुनीश्वर ।
पर्वगादिषु मासेषु विषुवायनसंयुताः ॥ १३९ ॥
प्रथमा इति पञ्चाशत् तिथयः पार्वणे मुने ।
उपक्रमाच्च त्रिदिनं पूर्वाः पञ्चदशापि च ॥ १४० ॥

उपक्रमेण पश्यन्तं सौख्यमुत्सर्जनात् परम् ।
रात्रयः शुक्लपक्षेषु कृष्णपक्षेषु कृत्स्नशः ॥ १४१ ॥
अनध्यायस्तथाऽन्ये ये ते च दृष्टप्रचोदिताः ।
तथा सेयं मुहूर्त्तोख्या याऽनध्यायस्य साऽपि च ॥१४२॥
अङ्गाध्यायन इत्युक्ताः स्वाध्यायाः सकला अपि ।
अधिकर्त्तव्यमेषाङ्गमङ्गित्वैकप्रयोजनात् ॥ १४३ ॥
ग्रुवेस्तद्यतिरेकेण त्वङ्गित्वाभावसम्भवात् ।
पक्षादिमध्यान्त्योपान्त्या अङ्गानामङ्गिनामपि ॥ १४४ ॥
अनध्यायः प्रदोषस्य संध्यास्त्रिर्मध्यमा निशा ।
चयोदशी चतुर्थी च सप्तमी कालयाऽपि च ॥ १४५ ॥
रात्रिं स्पृशति मौनी स्यात् प्रदोषो यदि तत्र सः ।
रात्रेर्दिनचतुर्थी वा प्रहरः कथ्यते बुधै. ॥ १४६ ॥
सावानेव प्रदोषश्च पूर्वैस्त्रिंशांशकैर्मुने ।
आद्यास्त्रिंशांशनाडयश्च चतुर्थी तूत्तरे मुने ॥ १४७ ॥
प्रदोष. पूर्वरात्र्यर्धं विरामघटिकाऽपि वा ।
मध्यन्दिने पर्वसन्धिरित्यादिषु न चिन्तयेत् ॥ १४८ ॥
दिनचपायुक्तदोषं श्लोकानां त्रिगुणाऽष्टसु ।
अर्कमानकलास्तस्य मुक्तिश्चेत् षष्टिनाडिकाः ॥ १४९ ॥
संक्रान्तिकालस्तद्विम्बं यावत् चेत्रद्वयेऽपि स. ।
बिम्बमध्यं ग्रहस्यास्ति यत्र तत्र स्थितश्च स ॥ १५० ॥
तस्मिन् परापरक्षेत्रे ग्रहे द्वे तु यथोचिते ।

भुक्त्वेवमभुक्त्वं तत् तथाऽन्यत्र नारद ॥ १५१ ॥
तिथिनक्षत्रयोगाद्देर्विम्बमध्यं प्रबोधकम् ।
शुभाशुभं स्मृतं तस्मान्नैव चेत् तदृथा फलम् ॥१५२॥
संक्रान्तेः प्रागसुतार्द्धं सार्धा. षोडश नाडिकाः ।
सुतार्द्धे च तावत्य. पश्चादिति हि नाडिकाः ॥ १५३ ॥
यत्र विंशत् संक्रमस्य सर्वकालेषु नारद ।
या याः संनिहिता नाड्यस्तास्ताः पुण्यतमा मता.॥१५४॥
भुक्तार्द्धे वाऽप्यभुक्तार्द्धे स्नानदानादि कारयेत् ।
पर्याप्तमुभयं रात्रावेव चेत् तत् तथोच्यते ॥ ॥ १५५ ॥
भवनान्तं विम्बमध्यं रात्र्यर्धात् प्रागुदेति चेत् ।
स्नानदानादिमध्याह्नात् कुर्यादूर्ध्वं गते दिने ॥ १५६ ॥
रात्र्यर्धादुपरि चेत्रे याति चेदन्यथाऽर्यमा ।
चन्द्रयागामिनि मध्याह्नात् पूर्वं स्नानादि कर्म यत्॥१५७॥
यद्यर्धरात्र एवं स्यात् संपूर्णे रविसंक्रमे ।
तदा दिनद्वयं पुण्यं स्नानदानादिकर्मसु ॥ १५८ ॥
भुक्तार्द्धेऽमभुक्तार्द्धे चोभयं च दिवाऽस्ति वा ।
याम्यायनं विष्णुपदं चाभुक्तार्द्धेऽतिपुण्यदम् ॥ १५९ ॥
षडशीतिमुखं चोदगयनं भुक्तवेश्मनि ।
विषुवत्युभयं तुल्यं सर्वमेतत् पुनान्यतः ॥ १६० ॥
चलसंक्रान्तितन्मात्रः संक्रमोपरि संक्रम (१) ।

---

(१) 'चलसंक्रान्तिर्मध्यो संक्रमो य स संक्रम '—पा० २ पु० ।

नान्योऽन्यत्र च तत् चेत्र नैति तत्क्रान्तिकद्यया ॥१६१॥
भुक्तक्षेत्रमभुक्तर्क्षं वा विज्ञायाह्नि संभवम् ।
वृथाऽन्यत्र कृतं कर्म भस्मनीव हुतं हविः ॥ १६२ ॥
तदभावे तदासन्नकाले चापि ह्ययेतरत् ।
क्रान्तेः पूर्णाफलं केन्द्रप्रवेशादुभयं समम्(१) ॥ १६३ ॥
कालस्य निर्णयो ह्येतम्मृगकर्कयोः सपादयोः ।
अर्काह्ने शुक्लसप्तम्यां पुष्यर्क्षे चोत्तरायणे ॥ १६४ ॥
सप्तमीव्रतमन्विच्छेत् सर्वकार्यार्थसिद्धये ।
अष्टमीनवमीद्वन्द्वैर्ह्यर्धनारीश्वरव्रतम् ॥ १६५ ॥
नभस्ये रोहिणी षष्ठी व्यतीपाते यदीरिता ।
पुष्या कपिलषष्ठीह द्वादशी विजया हरौ ॥ १६६ ॥
कार्ष्णभेऽर्के व्यतीपाते ह्यमा पौषी यदा भवेत् ।
अर्धोदयः पुण्यराशिं करत्यर्धसुपेक्षितम् ॥ १६७ ॥
योगरूपाः पुण्यकालास्तिथ्यादीनां मुनीश्वर ।
काम्यन्ते तेन येऽवस्ति वेदवोप इति स्थितिः ॥ १६८ ॥
अलं मुहूर्त्तमात्रं वा स्नानादिभ्यो हि योगजम् ।
रात्रौ दिवा पञ्चदश मुहूर्त्ताः कुतपोऽष्टमः ॥ १६९ ॥
मैत्रस्तृतीय. पुत्राह्वः पुंनक्षत्राणि च रोहिणी ।
अश्विनी कृत्तिका हस्तमघाऽपि च पुनर्वसु ॥ १७० ॥

---

(१) 'तर्कप्रवेशादुभयोः समः'—पा० २ पु० ।

प्रौष्ठपद्द्वितयं विष्णुः केचित् सौम्यमिति स्थितिः ।
इति ते कथितं वत्सान्यच्च वक्ष्यामि तत्त्वतः ॥ १७१ ॥

इति श्रीब्रह्मसिद्धान्ते तृतीयोऽध्यायः ॥ ३ ॥

अविक्षेपस्फुटक्रान्तेरुदक्छिन्नस्ततः पुरः ।
उदेति पश्चादेत्यस्तं वा छिन्नस्तदन्यथा ॥ १ ॥
पश्चिमस्थः प्रागुदेति पश्चात् प्राक्स्थोऽस्तमेति हि ।
अन्यथा चेदन्यथा दृक्कर्म यत् कल्पितं तथा ॥ २ ॥
विक्षेपस्तत्फलं स्याद्यद्यभा द्वादशोऽङ्गुलम् ।
खमध्यग्रहयोर्मध्यं नतं क्षितिजकल्पना ॥ ३ ॥
तन्नतात् तद्दिनार्धं च फलं प्राक्सिद्धमेव हि ।
ग्रहणादन्ययोगे च कालभेदे तथैव हि ॥ ४ ॥
मध्याह्नोन्नतयुदयास्तेषु दृक्कर्मोदाविदं स्मृतम् ।
क्रमचापोत्क्रमज्याभ्यां क्रान्तिः सविग्रहस्य च ॥ ५ ॥
त्रिज्या चेन्मध्यदृष्टानां क्षेपलिप्तान्तरे पुनः ।
दृक्कर्मस्थो नतः प्राक्स्थ इव पश्चादिति स्थितिः ॥ ६ ॥
दृश्यते यः क्रान्तिदेशो भेदाभेदे यथाक्रमम् ।
तस्मन्मेरुदिगंशानामल्पः स्याद् दृश्यते तथा ॥ ७ ॥
स्खलनं मध्यकचायामधिकस्वल्पमन्यगम् ।
तदर्धमुत्क्रमज्यैषा तादृक् खण्डैर्हि साधिता ॥ ८ ॥
द्वादशीज्या समैः खण्डैरुक्तं च धनुरुत्क्रमम् ।

अल्पत्वात् स्खलनस्यैवं क्रमचापं स्मृतं त्विह ॥ ९ ॥
त्रिभशानं मध्यमार्गे महत्स्खलनसूचकम् ।
क्रान्तिक्रान्त्यूनपरमक्रान्त्योस्त्वेवं तदल्पतः ॥ १० ॥
द्वितीयं पापदृष्टीनां दृक्कर्म मुनिसत्तम ।
द्वितीयमेव दृक्कर्म नेच्छन्त्युत्तमदृष्टयः ॥ ११ ॥
शास्त्रीयव्यवहारो हि लौकिकं किंप्रयोजनम् ।
केचिदन्येऽपि नेच्छन्ति तादृक्प्रत्यक्षकारणात् ॥ १२ ॥
खमध्यगो मध्यलग्नमुदयात् क्षितिजोदयः ।
षसलग्नं सषड्भ तात्कालिकं स्पष्टकालिकात् ॥ १३ ॥
गतागतैष्यकालाच्च गतैष्यं लग्नमात्मज ।
लङ्कोदयैर्मध्यलग्न खमध्ये क्षितिजं न हि ॥ १४ ॥
लग्नग्रहाभ्यां कालश्च मुहुर्मुहुरिति स्थितिः ।
सूर्यात् प्राक्पश्चिमार्थे च शुक्लकृष्णे प्रकल्पयेत् ॥ १५ ॥
सूर्यास्तकालिकौ सूर्यादृग्रहौ साध्या सषड्ग्रहौ ।
ततस्तत्काललग्नार्थं कृष्णे त्वर्कौ सषड्भकात् ॥ १६ ॥
चक्रात् तदन्तरप्राणैर्मास्करास्तमनात् परम् ।
स्थिरीकृतैरदेत्यन्यः शुक्ले कृष्णेऽस्तमेति हि ॥ १७ ॥
दिनरात्रिग्रहात् पूर्वापरमार्धोदयात् स्वकात् ।
आसन्नार्कास्त तद्भिच्छन्तो मूढ इतीरितम् ॥ १८ ॥
शुक्ले प्रागुदितप्रायात् कालांशाः पश्चिमाजिताः ।
कृष्णे तु तौ सषड्भौ तु भास्करोदयकालिकौ ॥ १९ ॥

कार्याः कालांशकास्तद्वदूनकास्ते सकृद्‌द्वयोः ।
सूर्यात् पश्चिमतोऽस्तन्तं यान्त्ययं स क्रमः स तु ॥ २० ॥
प्राग्गो स्वमुदयं शुक्रे गच्छन्त्यन्येऽन्यथा मुने ।
द्वादशात्यष्टिमन्वीशदिक्तिथिः शीतगोः क्रमात् ॥ २१ ॥
अस्तांशा द्वादशाष्टौ च वक्रिणोर्बुधशुक्रयोः ।
तथा महत्त्वादनयोर्दूरत्वादितरस्य च ॥ २२ ॥
मूलाचयं विशाखार्द्रामित्रदस्राहिवह्नयः ।
दृश्यन्ते पञ्चदशभिः शेषाण्यष्टिभागकैः ॥ २३ ॥
मघाचतुष्कं श्रवणाद्वयं धाटभवासवाः ।
पुनर्वस्वभिजिच्चात्र मृगव्याधप्रभञ्जनः ॥ २४ ॥
अगस्त्यो ब्रह्महृदयं शक्रांशैरनिलेन्दुभि ।
मृगशीर्षं च भरणी पुष्योऽग्निः सप्तकांशकैः ॥ २५ ॥
तत्त्वाधिकांशा यस्योदक्क्षेपांशा नास्तगो भ्रमम् ।
एभ्योऽधिकोनैः कालांशैः क्रमाद्दृश्या अदर्शना ॥ २६ ॥
तदन्तराद्दिनादिः स्यात् कालो गत्यन्तरैक्यजम् ।
तत्कालांशोदयप्राणा स्वांशराशिकलामितिः ॥ २७ ॥
फलेच्छया तत्क्षेत्रांशैर्दृश्यताऽदृश्यताऽपि वा ।
सैव व्यक्षोदितांशैस्तु दृक्सिद्धं स्यात् क्वचिन्मुने ॥ २८ ॥
अल्पायुषां पाखण्डिनां गन्धर्वनगरादिवत् ।
खमध्यक्षितिजे दोःकोट्याश्रयैर्मौर्विके तयोः ॥ २९ ॥
दृग्भाशङ्कुर्मुने छाया व्यवहार इतीर्यते ।

त्रिज्या दृग्ज्या भवेच्छाया यदि कर्णोऽत्र कोटिजा ॥३०॥
लम्बज्यायां कोटिजीवा परमायां तु सोन्नता ।
त्रिज्यायां कोटिजीवायां कियतीति विशेषतः ॥ ३१ ॥
परिधिः कियतीत्येवं शङ्कुच्छेद इतीरितः ।
स्वदिनव्यासार्धकर्णौ तौ च शङ्कौ स एव च ॥ ३२ ॥
कियान् स तस्मिंस्त्रिज्यायामुन्नतज्येति साधिता ।
त्रिज्याधिकोनोदृग्वाक् परमौर्व्योऽन्त्यमौर्विका ॥३३॥
मध्यंदिनजमध्यैक्यात् सा नतज्या मता दिवा ।
तदुत्क्रमधनुःप्राणास्तत्प्राणा न प्रभा यतः ॥ ३४ ॥
व्यासार्धे लम्बजीवायां त्रिज्यया च समा भुने ।
कल्प्यः शङ्कुस्तदा तत्स्त्रिज्यस्तेद्द्वादशाङ्गुलः ॥३५॥
छायाकर्णौ वा दिनार्धे क्रान्त्यक्षाभ्यां भुजांशकैः ।
शङ्क्वोन्नतूनविस्वार्धयुतिच्छायानतासुभिः ॥ ३६ ॥
कथ्यो युक्तोऽपि पक्षे प्रागिनेऽग्रोर्थेन्न भिद्यते ।
तज्ज्योनं च दिनार्धांग्नं नतनं चापि तत् किल ॥३७॥
अनुक्तं यत एवैतदन्यप्रश्नचतुष्टये ।
अविम्बकस्तु दर्शेऽधःस्थितः सूर्योऽत्र दृश्यते ॥ ३८ ॥
पौर्णिमायां सदन्तःस्थैः संपूर्णः सूर्यरश्मिभिः ।
अन्यत्र यायाम् विप्रकर्षस्तावच्छुक्लं त्रिधोर्विधिः ॥ ३९ ॥
चन्द्रादान तदायायां समो दृग्गतः शशी ।
अङ्गाध्यायी शौनकस्य मेरुवासीत्यतः समम् ॥ ४० ॥

ह्रासिद्धी ययोर्दृच्चवरेषास्य तिथिं प्रति ।
क्षीयमाणकला देवा ध्नन्त्येककलं तथा ॥ ४१ ॥
वर्धयन्ती क्षीयतेऽसौ एवं वेद न हि कश्चित् ।
अविम्बनानामन्येषां दूरस्थत्वादिदं न हि ॥ ४२ ॥
येन दर्पणवत् स्वच्छा जायन्ते तेषु चांशवः ।
लाञ्छनं प्रतिबिम्बं गोगौंसतीन्द्राविनांशुभि. ॥ ४३ ॥
चन्द्रेण शौक्ल्यं नाऽन्येषां तद्दर्शोऽप्यस्ति यत् ततः ।
बिम्बे सितासिते पक्षे व्यर्केन्दोरर्कभागतः ॥ ४४ ॥
रवीन्दुमध्यक्रान्तिज्या त्रिपुवत्कर्णसंगुणा ।
मध्याह्नाद्यन्द्रशङ्क्वाप्ता छत्तारार्वाग्विधौ रवे. ॥ ४५ ॥
कृत्वा धनं चाग्रभायां भुजोऽर्कादिन्दुदिङ्मुखः ।
यस्याल्पा ज्या खमध्येन्दुच्छाया कर्णहृता तथा ॥ ४६ ॥
द्वादशघ्नजीवायाः कल्पना या रवीन्दुवत् ।
खमध्याद्विपुवत्कक्षा मध्यतो ज्यां निरस्य हि ॥ ४७ ॥
भुजा अपि लयं यान्ति कर्णौ छेदककोटिज ।
अर्कसंक्षितदिङ्मध्याद्बाहुशङ्कुस्तथा भवेत् ॥ ४८ ॥
प्राक्पश्चात्समुखौ शुक्ले कृष्णे कोटिं प्रसार्य तत् ।
बाहुकोट्यग्रगं कर्णकोटिकर्णयुतेर्विधोः ॥ ४९ ॥
बिम्बं तदूर्ध्वमानेन लिखेत् कोट्याग्ययेण च ।
प्राग्रेखे याम्यरेखे च तदन्तर्मध्यमस्ततः ॥ ५० ॥
कर्णेन तन्मुखं शुक्लं कृष्णं वा परभागतः ।

तदा स्वाऽग्रयाम्योदङ्मध्यमत्स्यद्वयस्य च ॥ ५१ ॥
मध्यसूत्रयुतेश्चापं विन्दुचिह्नगुलिखेदिह ।
कोज्या साधितयाम्योदग्रेखान्ते श्टङ्गमुन्नतम् ॥ ५२ ॥
अनेकगुणकच्छेदभवांशांशच्छेदसंमितान् ।
द्वन्द्वगौ नाशयेद्वाऽपवर्त्तयेदिच्छयैव तु ॥ ५३ ॥
बाहुसिद्धो हि यश्छेदस्तादुत्पत्तौ हरा गुणा ।
गुणगुण्या हरा इत्थं विज्ञेया अन्यथा यदि ॥ ५४ ॥
तावत् स्वदेशलम्बज्या स्वज्यासाम्यं यथा तथा ।
तां त्रिज्यां कल्पयेद्धीमान् व्यवहारसुखप्रदम् ॥ ५५ ॥
तथा क्रान्तिज्यका सत्यग्रज्येति परिकीर्त्तिते ।
क्रान्तिज्याविषुवत्कर्णाहताऽग्रज्याऽपि भास्करैः ॥ ५६ ॥
सा चेत् त्रिज्येष्टभाकर्णस्तदा ग्राह्योऽङ्गुलादिका ।
क्रान्तिज्या चेष्टकर्णघ्नी लम्बज्याप्ताऽङ्गुलादिका ॥५७॥
स्वगद्युतुल्यक्रान्तिज्याग्राङ्गुलं विषुवश्रवः ।
यद्वाङ्गुलफलं वा मध्येपुकर्णौन्नितीतरौ ॥ ५८ ॥
मध्यात् प्राक् पश्चिमागा या सममण्डलमुच्यते ।
सायं प्रातर्मध्यह्रस्वमेरुश्चोदयदृग्द्वयम्(१) ॥ ५९ ॥
उन्नागस्था प्राच्यपरा या रेखा सममण्डलात् ।
उन्मण्डलं तयोर्मध्यं सर्वत्र विषुवत्प्रभा ॥ ६० ॥
विषुवन्मण्डलादेषा छायाग्रे विषुवाऽत्र हि ।

(१) सा सममध्येऽस्तमयस्य मध्येदृङ्मण्डलम् । इति—पा० २ पु० ।

लघुच्छायाग्रविषुवन्मध्यज्यायार्धमुच्यते(१) ॥ ६१ ॥
सा रेखोन्मण्डलाद्भाग्रे सदाऽन्याग्रा ह्यतिष्ठत ।
उन्मण्डलादुदक्छायायाम्यक्रान्तावपागुदक् ॥ ६२ ॥
भुज इत्युच्यते मध्यं समण्डलभाग्रयोः ।
अतो माध्याह्निकी छाया नित्य माध्याह्निकी द्विज ।६३॥
यदा दिनार्धे दृक्क्रान्तिः स्वाक्षच्छाया तदा न हि ।
रवेः शङ्क्वग्रसाम्यत्वाच्छायास्तत् प्रतिदृश्यते ॥ ६४ ॥
यदोदक्क्रान्तिरक्षोना तदोदगुदितो ग्रहः ।
उदगस्तं यथाहृति सममण्डलमेव च ॥ ६५ ॥
क्रान्तिज्या विषुवच्छाया यदि स्याद्विषुवस्थवः ।
सममण्डलशङ्कुस्थच्छायाकर्णौ तु पूर्ववत् ॥ ६६ ॥
अथवा द्वादशाभ्यस्ता लम्बाक्षज्याविभाजिता ।
सममण्डलगे सूर्ये कर्णो क्रान्तिज्यया सकृत् ॥ ६७ ॥
छायाकर्णविभक्तायां तदाऽग्राविधजः स तु ।
सममण्डलशङ्कुर्वा त्रिज्या तेनार्कताडिता ॥ ६८ ॥
शङ्कुर्याम्योत्तरा त्रिज्या कल्प्यार्धं तत्कृतेस्तथा ।
दोःकोटिमध्यज्यावर्गं तन्मध्ये सार्धमं यत. ॥ ६९ ॥
पूर्वापरां कोटिकृतिं तदेव मनुतान्मुने ।
दोर्ज्याविभाकोटिकृत्योः कल्प्या त्रिज्याकृतिर्युतिः ॥७०॥
अर्कच्छायार्कवजज्ञेया यदा तावत् तदाऽग्रजा ।

---

(१) दृष्टच्छायामविषुव-मध्यममार्धेन मुो इति—पा० २ पु० ।

फलमित्युच्यते तावत् तद्व्यचचितिजान्तरम् ॥ ७१ ॥
त्रिज्यावर्गार्धमध्यार्धराचिज्याऽवर्गमेव तु ।
अग्र ज्यावर्गहीनं तत् कोणाकोदयमध्यगम् ॥ ७२ ॥
तत्कालविभजावर्गो यदि शङ्कुकृतिर्भवेत् ।
कोटिज्याकृतिरेषा हि कर्णोत्याहुरागमाः ॥ ७३ ॥
फलवर्गो बाहुवर्गः कर्णः शङ्कुद्वयोद्भवः ।
स कोणस्यग्रहो व्यचचितिजान्तर एव हि ॥ ७४ ॥
सटकफलः स्वशङ्कुः स्वखार्धफलवर्जितः ।
ऊर्ध्वाधःस्थं स्वकं त्र्यचचितिजादादवाग्दृक् ॥ ७५ ॥
याम्यायां विदिशोः शङ्कुः स शङ्कोर्दक्षिणोत्तरा ।
मध्यच्छायातो भुजज्या सौम्यतो दक्षिणोत्तरा ॥ ७६ ॥
याम्यतोऽचक्रान्तिरज्ञा चलज्या लम्बगा यदि ।
रवौ चरत्युत्तरयोः प्राग्वत् कोणाचभाद्युतिः ॥ ७७ ॥
द्वादशाचप्रभा क्रान्तिस्तेन मेषादिगो रविः ।
कर्कादौ प्रोज्झ्य चक्राधात् तुलादौ भार्धसंयुतः ॥७८॥
मृगादौ प्रोज्झ्य भगणात् याङ्गुर्वाद्युक्पदे ।
चलसंस्कृतसूर्योनच्छायार्के भाजिते क्रमात् ॥ ७९ ॥
प्राक्पश्चान्मध्यरेखातो देशः स्वीयस्तदन्तरम् ।
देशान्तरफलं भानीयुतयाऽन्यत् सकलं मुने ॥ ८० ॥
छायार्कक्रान्तिराशाः स्युश्चलाः स्वलमिनादिके ।
छायार्के स्वृणमुने प्राक् पश्चाच्चक्रं च लम्बते ॥ ८१ ॥

कोणच्छायाकृतिदलात् पदं वा त्रिज्यया हतम् ।
कोणात् कर्णहृते क्रान्तिज्यातच्छाया तथा रविः ॥८२॥
क्रान्तिज्येष्टाग्राङ्गुलाद्वा भाकर्णाभ्यां समाध्वनि ।
भुजाङ्गुलं भुजच्छाया वेधां कोटिस्तलाविधः ॥ ८३ ॥
शङ्कुपूर्वापरा रेखा तथाऽन्या मध्यमरक्षजा ।
श्वभ्रैः समीकृतस्थाने कल्पना द्वादशाङ्गुलम् ॥ ८४ ॥
व्यासार्धाङ्गुलमुत्सेधः षडंशव्यासमेव च ।
छायामध्यशलाकाभ्यां छायाग्रज्ञानदुर्बलः ॥ ८५ ॥
मध्ये तुन्नतशिखरं नखाद्रि७२०व्यङ्गुलोच्छ्रितम् ।
स्वाङ्गुलैनैव सर्वथाचाङ्गुलज्ञानकारणम् ॥ ८६ ॥
सूच्यग्रेणष्टकत्तस्य प्रोतेनाङ्गुलमध्यगम् ।
स्थापयेत् प्रान्तच्छायां शङ्कोर्यत् तदमध्यतः ॥ ८७ ॥
छायाग्रं यत्र भूहत्ते पूर्वाह्णे प्रत्यगेव तत् ।
मध्यात् तथाऽपराह्णेऽर्के दिशि शङ्कुं निधाय च ॥ ८८ ॥
प्राचीं निर्दिश्य भाग्रेण व्यक्तं वाङ्कं प्रभायत. ।
कोटी यथार्हं संप्रसार्य दो कोट्योर्मार्गगां तथा ॥ ८९ ॥
रेखा प्राच्यपरा कुर्याद्भुजज्ञाने फलं यदि ।
ततस्तयायोर्याम्यगेऽर्के वर्धते वाङ्कवत्तरा ॥ ९० ॥
प्राचीति वै जायतेऽर्के ततस्तत उदग्गते ।
भुजस्ततो दक्षिणाग्रप्रभा प्राच्यग्रदिग्गता ॥ ९१ ॥
स्वग्रान्तरं तस्माद्बिन्दोर्यम्मुखोऽर्कस्तदाचरेत् ।

—

तद्दिङ्मुखं प्रसार्य प्राग्विन्दुमुद्दं हि नि क्षिपेत् ॥ ९२ ॥
तत्र पूर्वापरा रेखा तन्माध्याद् दक्षिणोत्तरा ।
सप्तगाङ्ग नमेतस्मात्मारखेन मुनिसत्तम ॥ ९३ ॥
दिग्ग्रहङ्गुलादिको मध्यच्छायाहतद्ब यदि ।
भाग्ज्ञानेन चैवं स्याच्छङ्कुच्छेदुन्नतं किल ॥ ९४ ॥
कालस्तु पञ्चोना नाड्यस्तन्मध्यस्त्वलिप्तिका ।
नाश्येति क्रान्तिरेकाह्ने मध्याह्ना कलयाऽपि वा ॥ ९५ ॥
अतोऽग्राङ्गुलमेकं वा द्व्यङ्गुलं न हि सिद्ध्यति ।
देशाश्च सुस्फुटा एव भवन्ति मुनिसत्तम ॥ ९६ ॥
चतुरस्रं यावदिष्टं तत्कर्णाधेशलाकया ।
कोणं वाऽपि शलाकाभ्यां तान्तीभ्यां दिगन्तत ॥ ९७ ॥
यदा विस्तरसूत्राग्रदिशोर्मध्ये विदिक्ष्वपि ।
निक्षिप्य चतुरस्रं तु वंशे तु स्थापनादिषु ॥ ९८ ॥
सत्यूनतेऽर्धनाड्यूने दुर्दशा स्यात् प्रभा मुने ।
दुर्दशाया यथाछाया विन्यसेत् तद्यादिगमम् ॥ ९९ ॥
चापस्त्वग्रयसाग्रे छायामर्गा मुनीश्वर ।
व्यासज्या चतुर्विंशत्यधिका नतसम्मता ॥ १०० ॥
तद्राधिको क्रमज्या त्रिज्यान्विता हि नतोत्क्रमा ।
चरक्रमज्या सत्रिज्या भवेदन्त्या तत सुत ॥ १०१ ॥
त्रिज्याधिकक्रमधनुरेवमुक्तं समासत (१) ।

(१) त्रिज्याधिकक्रमधनुस्तत् त्रिभेन युतं धनु । इति—पाठ २ पु० ।

कोणच्छायाकृतिघ्नात् पट्वा त्रिज्यया हृतम् ।
कोणात् कर्णहृते क्रान्तिज्यातश्छाया तथा रविः ॥८२॥
क्रान्तिज्येष्टयाङ्गुलाद्वा भाकर्णाभ्यां समाध्वनि ।
भुजाङ्गुलं भुजश्छाया वेशां कोटिस्तलाविधः ॥ ८३ ॥
शङ्कुपूर्वापरा रेखा तथाऽन्या मध्यमत्स्यजा ।
त्र्यद्रिः ममीकृतस्थाने कल्पना द्वादशाङ्गुलम् ॥ ८४ ॥
व्यासार्धोङ्गुलमुत्सेधः षडंशव्यासमेव च ।
छायामध्यशलाकाभ्यां छायाग्रज्ञानदुर्बलः ॥ ८५ ॥
मध्ये वृन्तशिखरं नखाद्रि७२० व्यङ्गुलोचितम् ।
द्वाङ्गुलैनैव सर्वबाधाङ्गुलज्ञानकारणम् ॥ ८६ ॥
सूच्यग्रेणाष्टकृतस्य प्रोतेनाङ्कितमध्यगम् ।
स्थापयेत् प्रान्ततश्छायां शङ्कोर्यत् तदमध्यतः ॥ ८७ ॥
छायाग्रं यत्र भूहस्ते पूर्वाह्णे प्रत्यगेव तत् ।
मध्यात् तथाऽपराह्णेऽर्के दिशि शङ्कुं विधाय च ॥ ८८ ॥
प्राचीं निर्दिश्य भाग्रेण व्यस्तं बाहुं प्रभायतः ।
कोटी यथार्हं संप्रसार्य दोःकोट्योर्मार्गगां तथा ॥ ८९ ॥
रेखां प्राच्यपरां कुर्याद्भुजज्ञाने फलं यदि ।
ततस्तयायोर्याम्यगोऽर्के वर्धते बाहुरुत्तरा ॥ ९० ॥
प्राचीति वै जायतेऽर्के ततस्तत उदग्गते ।
भुजस्ततो दक्षिणग्रभा प्राच्यग्रदिग्गता ॥ ९१ ॥
यद्यान्तरं तमाविस्र्दोर्यमुखोऽर्कस्तदाचरेत् ।

तद्दिग्भुजं प्रसार्य प्राग्बिन्दुभुजं हि निक्षिपेत् ॥ ९२ ॥
तत्र पूर्वापरा रेखा तन्माध्याद् दक्षिणोत्तरा ।
सममण्डनतेस्तात्स्याद्येन मुनिसत्तम ॥ ९३ ॥
छिन्यङ्गुलादिको मध्यच्छायाहच्चेद्ल यदि ।
यद्यान्तानेन चैव स्याच्छङ्कुश्चेदुन्नतं किल ॥ ९४ ॥
कालस्तु पञ्चोना नाडयस्तन्मध्यस्तत्त्वालप्निका ।
नाप्येति क्रान्तिरेकाहे मध्याह्ना कलयाऽपि वा ॥ ९५ ॥
अतोऽप्यङ्गुलमेकं वा द्वयङ्गुलं न हि सिद्धयति ।
देशाद्य सुस्फुटा एव भवन्ति मुनिसत्तम ॥ ९६ ॥
चतुरस्रं यावदिष्टं तत्कर्णाग्रशलाकया ।
कोणं वाऽपि शलाकाभ्यां तान्तीभ्यां दिगन्तत ॥ ९७ ॥
यद्वा विस्तरसूत्राग्रदिशोर्मध्ये विदिक्ष्वपि ।
निक्षिप्य चतुरस्रं तु वंशे तु स्थापनादिषु ॥ ९८ ॥
सत्यूनतोऽर्धनाडयूने दुर्दशा स्यात् प्रभा मुने ।
दुर्दशाया यथाच्छाया विन्यसेत् तद्यथादिशम् ॥ ९९ ॥
चापस्तत्रयस्याग्रे छायामर्गा मुनीश्वर ।
ज्यासख्या चचतुर्विंशत्यधिका नतसम्भवा ॥ १०० ॥
तत्राधिके क्रमज्या त्रिज्यान्विता हि नतोत्क्रमा ।
चरक्रमज्या सत्रिज्या भवेदन्त्या तत सुत ॥ १०१ ॥
त्रिज्याधिकक्रमधनुरेवमुक्तं समासत (१) ।

(१) त्रिज्यधिकक्रमधनुरतत् मिश्रेण युत धन् । इति—पाठ २ पु० ।

र्यन्यत्र तुल्यमज्याभिरधिकादुभयं तथा ॥ १०२ ॥
शङ्कोस्तज्यांशाङ्गुलैस्तु दृष्टे क्रान्त्या यथोदितम् ।
उदयास्तमनस्थानं मध्यं ज्ञात्वा नतांशकैः ॥ १०३ ॥
तच्चापदिननाडंशैर्दिङ्मध्ये न प्रभापदम् ।
विभज्य वा कालबोधः कालखण्डं प्रकल्प्य वा ॥ १०४ ॥
निधाय दृक्के प्राक्पश्चाच्छङ्कोर्मध्याह्नभागगे ।
कोटिज्यांशाङ्गुलोत्सेधं मध्यं शङ्कोरुपर्यपि ॥ १०५ ॥
ब्रह्माण्डमध्यं सूच्यग्रे शङ्क्वग्रं नाडिकांशतः ।
शङ्क्वग्राच्च प्रभामार्गस्पृक्सूत्रैः कालवेदनम् ॥ १०६ ॥
गोलार्धमध्यव्यासार्धयष्ट्या वा कालवेदनम् ।
क्रान्त्या मध्यनतेन प्रथममङ्कनं सुखम् ॥ १०७ ॥
धनुर्वेद्यं विधिः कल्प्यो नतदिक्षुपमस्तकम् ।
धरारन्ध्रे मध्यमानं प्रोतयेत्र च मध्यतः ॥ १०८ ॥
लम्बसूत्रेण चक्रस्य क्रमाङ्कैर्ज्ञायते क्वचित् ।
समाङ्कैः कालविज्ञानं मांसं प्रत्यनुपाततः ॥ १०९ ॥
चेष्टानुमितिनाडीनां पद्मनिश्वासतो यदि ।
कुजो मयूरो वा स्याता किं तत. शाल्मलोद्भवौ ॥ ११० ॥
नरं कपिं मयूरं वा स्थूलवेशाद्रं मुने ।
कर्णादर्भं पूर्णजलं दृष्टच्छिद्रं प्रकल्पयेत् ॥ १११ ॥
न्यस्तं तोये च तत् काष्ठं संबद्ध्वा वदनाद्बहिः ।
तावत्येवाङ्कनं कालश्चित्रेणानेन गम्यते ॥ ११२ ॥

गोपयेज्जलनिःस्रावं मध्येऽस्त्वं नमनं तथा ।
लम्बसूत्रं प्रचलमानं पश्यन्कुं च समान्तरम् ॥ ११३ ॥
रक्ततन्त्वादिना यावन्नाडीपश्चान्तरेति यत् ।
ततो निरभ्रे घटास्त्वान् पूरयेच्चोपलज्जलैः ॥ ११४ ॥
अमलेऽम्भसि वा कुण्डे पलानां दशभिः शतम् ।
ताम्रपात्रमधश्छिद्रं चतुरङ्गुलमुच्यते ॥ ११५ ॥
हेममाषचतुष्केण ग्राह्याऽऽननविस्तृतौ ।
दद्याद्गुलकासुरवेधे षष्टिसंख्यात्पलनिमम् ॥ ११६ ॥
तत् पात्रं यादृगपि वा यथैवं तत्र गृह्यताम् ।
कपालयन्त्रेणानेन कालो ज्ञेयः स्फुटेन च ॥ ११७ ॥
देवदारुः शिवतरुः खदिरो रक्तचन्दनः ।
शङ्क्वर्थं स्वच्छनिर्बाधा ग्राह्या यज्ञीयभूरुहाः ॥ ११८ ॥
पदं हस्तोच्छ्रितः शङ्कुरधोहस्तनिखातगः ।
तद्वेधचक्षुषा कल्प्यो द्वादशाङ्गुलवानिति ॥ ११९ ॥
यष्टेरग्रे स्थितो योऽयं तदग्रे दर्पणे सुखम् ।
दिवा निरूप्यो भार्कौ निरूप्यौ चक्षुषः सुखम् ॥ १२० ॥
तादृक् शङ्कुद्वयं ग्राह्यं यथादिग्भ्रमणास्थितम् ।
ग्राह्यान्तरवेधमध्यमागमानां विवेचनैः ॥ १२१ ॥
इति ते कथितं विप्र तथाऽन्यत् तत्परः शृणु ॥ १२२ ॥

इति ब्रह्मसिद्धान्ते चतुर्थोऽध्यायः ।

समागमो वा युद्धं वा भौमादीनां परस्परम् ।
नो भावीति मुनिश्रेष्ठ चन्द्रेणैव समागमः ॥ १ ॥
समलिप्तौ यदा स्यातां दृक्कर्मांशौ मुक्त. समौ ।
तदा तदन्तरच्छेपे मानैक्यार्धसमे सति ॥ २ ॥
अन्योन्यस्पर्शमानत्वादुल्लेख युद्धमेव तत् ।
हीने भेदः समुच्येत चापसव्यं तथाऽधिके ॥ ३ ॥
आरादंशार्धसंख्यानां व्याप्निर्हि तु शशीनयोः ।
आब्रह्माण्ड कपालं तत्सच्चांशे तद्ग्रहान्तरे ॥ ४ ॥
रश्मिसंमीलनादर्शाविंशतौ यद्विमांशुमान् ।
समागमश्चेत् प्रख्यातस्ताराविम्बसमागमः ॥ ५ ॥
त्रिज्यांशाङ्गुलपथ्यग्रे तिर्यङ्मध्यांशकाङ्गुलम् ।
शलाकां स्थापयेन्मध्ये दण्डमूलं च पश्यता ॥ ६ ॥
सभेदयोगदृश्यौ तौ द्वौ शलाकाग्रयोः खगौ ।
मन.पूत्ये यष्ट्यां चाथैवं योगं प्रसाधयेत् ॥ ७ ॥
द्वयेऽप्यल्पांशकै यस्य याम्यः चेपोंऽशव द्वयात् ।
भवेदभ्यधिको भिन्द्याद्रोहिण्याशकटं हि सः ॥ ८ ॥
नाणुरेकोऽपसव्ये चेन्नापसव्यं तदिष्यते ।
तथा समागमेऽणुश्चेदेकोऽसात्रसमागमम् ॥ ९ ॥
अस्थूलात्रनणू द्वौ चेदुदक्स्थो दक्षिणस्थितः ।
स्थूलाणुप्रथमप्रष्योऽपीत्येवार्धत्रयं स्मृतम् ॥ १० ॥
साम्येऽपीत्यपिशब्देन सौम्येऽपीह च कीर्तितम् ।

तदुद्दिष्टाविमौ शब्दावुदक्स्थो दक्षिणाश्रितः ॥ ११ ॥
अदोप्तिमान् विवर्णश्च वेपथू रूक्षदर्शनः ।
दुर्बलश्चापि योऽणु. सावस्थूलस्तथमन्यथा ॥ १२ ॥
न पीडितश्च(?) स्थूलोऽणुर्वद्दृष्टान्ववाचिकौ ।
इमौ शब्दौ तथा स्यातामुदक्स्थो दक्षिणाश्रितः ॥ १३ ॥
ताविमावेव याम्यादिस्थूलाख्यत्वं तयोदितम् ।
याम्येऽपि युक्तमेवास्मात् स्थानादिबलमत्र चेत् ॥ १४ ॥
अन्यत्र नैतदित्याज्ञावैकृतात् तत् समीरितम् ।
स्थानादिबलभिन्नाऽत्र व्यर्था नैकाऽपि भा स्मृता ॥१५॥
अप्राप्यवयेऽप्येवमुष्मिन् स्थितौ सूक्ष्मफलं स्मृतम् ।
समागमेऽपि सव्ये वा स्वल्पौ द्वावपि वेपथू ॥ १६ ॥
स्वोत्कटौ विपन्नौ द्वावाशीनौ यदि समागमौ ।
उदक्स्थो दक्षिणस्थो वा भार्गवः प्रायशो जयी ॥ १७॥
जगतः कल्पनैवेयं भावाभावाय केवलम् ।
अन्योन्यमपि दूरस्थाः कथं युद्धं प्रकुर्वते ॥ १८ ॥
छादकोऽध.स्थितश्छाद्य उपरस्थः शशी रवेः ।
छादकाश्छादिका रात्रौ भूछाया मुनिसत्तम ॥ १९ ॥
यथैव प्रतिशलाभत्वं स्वोदृशं प्रत्युपप्लवः ।
सम्भवाद्रवितुल्येन्दोर्भूछायातुल्यशीतगोः ॥ २० ॥

छादकौ राहुकेतू तावन्योन्यस्यार्धचक्रगौ ।
एवं यद्युक्तदोषेऽपि नेति चेत् तद्वदन्मुने ॥ २१ ॥
तदा चेच्छुक्लकृष्णान्तादुपरागस्तदाऽन्यथा ।
न चेद् द्विरिन्दोर्मासं प्रत्यर्कस्य प्रतिवत्सरम् ॥ २२ ॥
यद्येक एव राहुः स्यान्न ग्राह्यस्तस्य भार्धगः ।
एकैकं ग्रहणं मासं प्रतिवर्षं प्रतीति च ॥ २३ ॥
मध्येन वटवल्मीकलक्ष्येऽङ्के वा स्थितः फणी ।
तद्वल्मीकस्थितो नास्ति चल्यो नार्कग्रहोऽस्ति चेत् ॥ २४ ॥
किं न स्याद् ग्रहणं शश्वत् कुतस्तत्र समं सदा ।
ग्रहणान्तरकालानां वैषम्ये किन्तु कारणम् ॥ २५ ॥
बहुप्रलापास्तेनोक्तास्तस्माद्देवविरोधिनः ।
निमित्तकारणं राहुर्द्वयोरेवोपरागयोः ॥ २६ ॥
विक्षिप्त फणिना चन्द्र सूर्यनाच्छादयेदथ ।
भेवः स्वयं वा भूच्छायां प्रविशेद् ग्रहणं भवेत् ॥ २७ ॥
शीघ्रगासौ शशी सूर्यं छायापश्चिमतोऽपि वा ।
प्रागत्यतीत्य तत्पश्चाद् ग्रहणं भास्करस्य च ॥ २८ ॥
प्राच्यांशः शीतगोस्तु प्राग्ग्रहणं प्रत्यगेव हि ।
अर्केन्दुशङ्कविक्षेपवरणानियमाः क्रमात् ॥ २९ ॥
फणीनभगणैक्याद्धि निमित्तग्रहणाधिपाः ।
समलिप्तौ यदाच्छाद्यच्छादकौ तत्र चेद्भुजः ॥ ३० ॥
विक्षेपजनको राहुर्धनः सोमग्रहस्तदा ।

अर्कग्रहोऽष्टांशकतदूर्ध्वंशान्नाधिकः स तु ॥ ३१ ॥
सर्वत्र सोमग्रहणं सोममेव हि दृश्यते ।
उभयोरन्तराभावाद्भूछायावान्तरं शशी ॥ ३२ ॥
योगो यदा तत्समः स्यात् तेनोद्देश्य उपप्लवः ।
पूर्वापरान्तराभावादभावो लम्बनस्य च ॥ ३३ ॥
पर्वप्रतिपदोरेव ग्रासमोक्षौ विधोर्मुने ।
न हि लम्बनहेतुः स्यादेव याम्योत्तरान्तरम् ॥ ३४ ॥
तस्मिन् सति त्रिपादस्थोऽप्युपरागोऽस्ति तद्दिने ।
तावत्कालस्तु याम्योदगन्या तत्त्वात् प्रसिद्ध्यति ॥३५॥
तदन्तरेण नासीतेः सम्भवाद्भास्करग्रहे ।
खेन्दुविपयुतोना दिक् तुल्यभेदे ग्रहान्तरम् ॥ ३६ ॥
साक्षाच्चोदङ्मध्यलग्ने क्रान्त्योः साम्येन सम्भवः ।
पूर्वापरान्तराभावान्मध्याह्ने माऽस्तु लम्बनम् ॥ ३७ ॥
अस्त्यन्यदा तु पूर्वाह्णे ग्रासमोक्षौ तु दर्शगौ ।
प्रतिपद्यपराह्णे तु तयाऽस्तो वा तदा क्वचित् ॥ ३८ ॥
अर्केन्द्वोरतिदूरत्वात् समीपत्वादिदं भवेत् ।
दृक्कर्मणैव तत्सिद्धो मध्यग्रहणसङ्गतौ(१) ॥ ३९ ॥
लम्बनावनती न स्तामपि सत्यन्तरद्वये ।
दृष्टलम्बनमन्यत्र यदोष्टाऽवनतिर्भवेत् ॥ ४० ॥
दृक्कर्म च तथा विप्र प्रत्यक्षं च ततस्तथा ।

---

(१) नमहमहसङ्गतौ—पा० २ पु० ।

दृक्कर्मणा द्वे च कृते व्यर्कं भासति तादृशे ॥ ४१ ॥
वृत्ताद्यवनतेर्भावोऽखण्डत्वाच्च यथा तथा ।
मध्यगा मध्यलग्नस्य नतज्याऽर्द्धेऽर्कवत् ॥ ४२ ॥
चरसंस्कृतलग्नज्या लब्धज्या चेद्भवत्यपि ।
अन्त्यक्रमज्योदयज्या त्रिज्या चेन्मध्यमौर्विका ॥ ४३ ॥
कोटिजीवोदयज्या स्यादिष्टघ्नं कोटिजास्फुटम् ।
मध्यज्याकर्णजा दोर्ज्याऽदृक्क्षेपो दक्षिणोत्तरः ॥ ४४ ॥
अन्यस्य दिग्मध्यजीवाद्युज्याविक्षेपवर्गयोः ।
विश्लेषो दृग्गतिर्मूलं शङ्कुरित्यपि चोच्यते ॥ ४५ ॥
नतांशस्फुटदोःकोटिजीवे दृक्क्षेपदृग्गती ।
छिदः शङ्कुहृते कुज्या हृतिश्छेदसमा यदि ॥ ४६ ॥
मध्यलग्नार्कयोर्दोर्ज्याकोटिलम्बननाडिकाः ।
मध्यात् प्राग्गतेरिन्दुर्ध्याल्लात् प्राक्समोऽमुना ॥४७॥
प्राक्कपालेऽन्यथा पश्चात् तथा स्याद्युतिरच्युत ।
लम्बनं पर्वतः शोध्यं प्राक्कपालेऽन्यथा परे ॥ ४८ ॥
असकृल्लम्बनं यावद्भिः सिद्धं सकलं समम् ।
रवीन्द्वोर्लम्बनं चेति श्रीरिजं चेति भास्करः ॥ ४९ ॥
वारयामास शक्राभ्यामन्ययोगेषु लम्बनम् ।
अग्रस्तोऽर्को विमुक्तो वा दिवा नक्तं च कालयोः ॥५०॥
व्यस्ते यथायथं दृश्यः पापिभिः सक्षमा इव ।
स्थिरीकृतं तद्दृरिजं लम्बनं स्वाष्टमान्वितम् ॥ ५१ ॥

पिटभुक्तिविहीनानामर्वं वा सर्वलम्बनम् ।
स्थिरीकृता दृग्गतिज्या सम्राटाङ्कहृताऽपि वा ॥ ५२ ॥
अथ च्छेदार्थमाच्छेदं खाष्टमेन स्थिरीकृतम् ।
यद्दोर्दृग्ज्याप्रभवो विना बाहुज्यया मुने ॥ ५३ ॥
मेषतुलान्तरक्षेत्रज्यातो वा ज्येकतः परम् ।
वर्गयोरुक्तदृक्क्षेप एष मार्गः सदा न सन् ॥ ५४ ॥
क्वचित् सन्नपि तत्रैतन्न क्वचिद्वाऽपि सन् किल ।
दृक्क्षेपत्रिभजा चेत् स्यान्मध्यभुक्त्यन्तरस्य च ॥ ५५ ॥
अर्कविम्बोः पञ्चदश नतिर्वा त्रिहृतिर्मुने ।
दृक्क्षेपसमुल्यंशो वाऽवनतिर्ग्रहणं ततः ॥ ५६ ॥
नतिरल्पान्तराद्वाल्पभागाभ्यां न हि दोषदा ।
दृश्यते द्वादशांशोऽपि स खच्छाद्ग्रह एव हि ॥ ५७॥
इन्दोर्लिप्तात्रयं वार्कस्योपात्स्वाङ्कतिरत्र न ।
ग्रहणं नामभेदो हि दुर्लक्ष्यमपि पुण्यदम् ॥ ५८ ॥
तैनान्तराल्पकग्रासो ग्राह्यं चेन्न समो यदि ।
सर्वग्रासोऽपि तिग्मांशोः क्वचिद्देशान्तरे सुत ॥ ५९ ॥
अर्केन्द्वन्तरसद्भावात् स्पर्शमात्रोऽपि नास्ति हि ।
पर्वाधिपतिसंख्यास्तु पातालग्रहणं हि तत् ॥ ६० ॥
स्नानादिषु तु न ग्राह्यं शुभेषु ग्रहयुद्धवत् ।
ग्रहणं ग्रहयुद्धं वा तत्तद्देशफलप्रदम् ॥ ६१ ॥
कृत्स्नं ग्रासाधिकं चान्याद्विमर्दग्रहणं च तत् ।

याग्दिम्बैकदेशेन तावद्देव भवेत् तदा ॥ ६२ ॥
विमर्दग्रहणं तावत्कालो वैमर्दिकः स्मृतः ।
चन्द्रबिम्बाधिकं सूर्यबिम्बमध्ये न कर्बुरम् ॥ ६३ ॥
तवैतत् कङ्कणाकारं कङ्कणग्रहणे मुने ।
तत्र कङ्कणकालः स्यादसौ वैमर्दिकस्तु यः ॥ ६४ ॥
स्थितिकालो भवेत् तावान् यावत् तिष्ठत्युपप्लवः ।
कर्णमानैक्यमानान्तरार्धक्षेपो भुजः स्वकः ॥ ६५ ॥
अन्या पूर्वापरा कोटिर्गत्यन्तरसमा यदि ।
स्थित्यर्धं च विमर्दार्धे क्रमात् स्यादष्टनाडिकाः ॥ ६६ ॥
कङ्कणार्धं विमर्दार्धं कङ्कणग्रहणे भवेत् ।
ग्रासो मोक्षो विमर्दार्धे नोमयुक्तः स एव सः ॥ ६७ ॥
निमीलनोन्मीलनाख्यं कङ्कणार्धेन तत् तथा ।
मुहुर्मुहुः कृताः सर्वे स्फुटाः सन्तु तदा मुने ॥ ६८ ॥
असकृल्लम्बनं सूर्यग्रहणेऽन्ये सकृत् तथा ।
मध्यस्पर्शादन्तरं वा स्थित्यर्धादि स्फुटं स्वकम् ॥ ६९ ॥
स्थित्यादौ तु धनं वा स्यात् खमध्यहरिजान्तरम् ।
मध्याधिकोने क्षितिजखमध्यदिग्घ लम्बने ॥ ७० ॥
स्थित्यर्धोदाग्रणं तद्वेदन्यथा हरिजान्तरम् ।
धनं कपालभेदेऽपि लम्बनैक्यं भवेन्मुने ॥ ७१ ॥
इत्थं स्फुटं वा स्थित्यर्धं विमर्दार्धं च नारद ।
स्थित्यर्धं लम्बनं चापि युगपच्चासकृत् स्फुटम् ॥ ७२ ॥

अङ्को गत्यन्तरं कोटिः कुमध्येऽष्टममचनम् ।
तदर्कयष्ट्स मध्यस्थित्यर्धम स्फुटं मुने ॥ ७३ ॥
स्फुटस्थित्यर्धं संभक्तं चेपो वाहुः अवस्ततः ।
ग्रासं तात्कालिकं प्रोज्भ्य मानैक्यार्धात् ततोऽन्यथा॥७४॥
इष्टग्रहणकाल. स्याद्ग्रासे स्पर्शमोक्षयोः ।
तत्र काल. स्फुटो याह्यो ग्रास उन्मीलनं तथा ॥ ७५ ॥
चतौर्थेऽचविधिः कल्पो मध्याह्नात् तत ऊर्ध्वग ।
याम्योत्तरं मुनिश्रेष्ठ लम्बनं तद्ग्रहान्तरम् ॥ ७६ ॥
नतोत्क्रमज्या द्युज्याघ्नी त्रिज्याप्ता क्रमकार्मुकम् ।
वलनं तद्भवेत् प्रत्यक्कपाले दक्षिणं हि तत् ॥ ७७॥
उत्तराभिमुखो याति तस्मिन् प्रतिपदं ग्रहः ।
प्राचीमध्यं ततं स्थानं याम्य प्रत्यङ्मादिशेत् ॥ ७८ ॥
उत्तरं वलनं प्राच्या वेलावलनमेव तत् ।
ग्राह्यं क्रान्तिचतुर्विंशमध्यं वलनमापनम् ॥ ७९ ॥
यद्वेलावलनं प्राच्या उत्तरोत्तरतो ग्रह ।
उदेति मकारादौ तत् प्राक् पश्चात् स्वर्णमत्र तत् ॥८०॥
अन्यत्रोदेति कर्कादावन्यादावत्र तत्र तत् ।
इति निष्पन्नवलनं पारमार्थिकमुच्यते ॥ ८१ ॥
तत् क्रमज्या त्रिभज्या चेद्बोधयोर्वलनाङ्गुलम् ।
समत्या साङ्गुलं वा स्यादल्पं यत् तदन्तरम् ॥ ८२ ॥

नान्यथोत्क्रमणा कार्या नतासोः सन्निभग्रहात् ।
वेदास्तु प्रवदन्त्येवं नतकालापवादतः ॥ ८३ ॥

इति ब्रह्मसिद्धान्ते पञ्चमोऽध्यायः ।

छेद्यकेन विना छेद्याः सुस्फुटा उपरागयोः ।
न ज्ञायन्ते यतस्तस्माच्छेद्यकज्ञानमुच्यते ॥ १ ॥
समभूदिङ्मध्यबिन्दोः सप्तवर्गाङ्गुलेन च ।
मानैक्यार्धेन वृत्तानां ग्राह्यार्धेन त्रयं लिखेत् ॥ २ ॥
तन्मध्यमं समासाख्यं बहिष्कं वलनाश्रयम् ।
ग्राह्यमण्डलमध्यस्थं दिशः प्रागेव साधिताः ॥ ३ ॥
यत्प्राच्या वलनं देयं तद्यथादिशमेव हि ।
पश्चाद्यत् तद्विपर्यस्त वलनं प्राक् प्रसिद्धये ॥ ४ ॥
आद्यन्तमध्यवलनैस्त्रिभिरेवाखिलं भवेत् ।
निमीलनोन्मीलनाभ्यां न किञ्चिदपि नारद ॥ ५ ॥
विक्षेपाग्रे यतश्चन्द्र परस्मादविसृज्य तत् ।
प्राङ्मुखं मध्यवलनं तद्दिक्षेपैकता यदि ॥ ६ ॥
भेदे पश्चान्मुखं देयमिन्दोर्भानोर्विपर्ययात् ।
सव्यापसव्यमार्गाभ्यां तथा तत्रासदर्शनात् ॥ ७ ॥
तिस्रो रेखामध्यबिन्दुं प्रापयेद्वलनत्रयात् ।
तत्प्रमाससमयुक्ताभ्यां विक्षेपौ ग्रासमोक्षिकौ ॥ ८ ॥
वलनाभिमुख बिन्दोः स्वविक्षेपं च मध्यगम् ।

विन्यस्तं विलिखेच्चापं विक्षेपत्रितयाग्रगम् ॥ ९ ॥
दृष्टच्छन्नोनमानैक्यदलसंमितयाऽऽस्यदम् ।
शलाकया मध्यबिन्दोर्नीत्वा चापे ततो लिखेत् ॥ १० ॥
ग्राहकार्धेन तद्विम्बं स्थानं चेत् स्पर्शमोक्षयोः ।
निमीलनोन्मीलनयोर्विन्द्याद्ग्रहणमीप्सितम् ॥ ११ ॥
अध्वान्तत्वाद्विधोः सूर्यग्रहणं छ्न्नमेव तत् ।
ध्वान्तं छादकमिन्दोर्यद्विशेषोऽयं विधोस्ततः ॥ १२ ॥
धूम्रं कृष्णं क्रमात् कृष्णं कृष्णं ताम्रं विनिर्दिशेत् ।
किञ्चिदूनाधिकैः पादैश्चार्धं कपिलमेव तत् ॥ १३ ॥
नदेयं यस्य कस्यापि रहस्यं शास्त्रमुत्तमम् ।
अर्थलुब्धाय मूर्खाय साहङ्काराय पापिने ॥ १४ ॥
गुरुभक्तिविहीनाय पुत्त्रायापि वदेन्न हि ।
एतद्देयं सुशिष्याय मुने वत्सरवासिने ॥ १५ ॥

इति श्रीशाकल्यसंहितायां ब्रह्मनारदसंवादे ब्रह्मसिद्धान्ते
द्वितीये प्रश्ने षष्ठोऽध्यायः ॥

समाप्तोऽयं ग्रन्थः ।

